**दृश्यते च** (भा)

इत्यादि ॥ नियमसत्त्वात् कथं प्राप्तिरिति शङ्कते

**कथमिति ।** (भा)

नियमस्यैवाप्राप्तिरित्युत्तरम् ॥

**न चैतस्मादिति ।** (भा)

चुरादिणिच इत्यर्थः ॥ ननु णिजुत्पत्तेः पूर्वं धातोर्वर्त्तमानत्वे कर्मणोऽपि सम्भवादाह

**नित्येति ।** (कै)

एवं च ततः प्रागवस्थायां प्रयोगस्यैवाभावेन कर्त्ता च कर्मचास्य नास्तीत्यर्थः ॥ कर्त्तेति दृष्टान्तार्थं फलान्तरमप्यस्य वक्ष्यते तदाह

---

मिति । किमेतस्य ज्ञापने प्रयोजनम् । पश्यन्ति भृत्या राजानम् दर्शयते

---

भा । न चानिर्दिष्टविषयः प्रतिषेध शक्यते विधातुमिति सर्वमेव सूत्रं क्रियते ॥ वनगुल्मस्येति । भा । कर्मोपलक्षणमेतत् । यत्र हि वनगुल्मस्य

---

स्यादेतत् । सकर्मकाणां सर्वेषामंशद्वयाभिधायितया कर्मकर्त्तरि कर्मवद्भावातिदेशादेव सिद्धानीह मूलोदाहरणानि । न चाध्यारोपित-प्रेषणपक्षे ध्यारोहयतो हस्तिन कर्मत्वाभावात् समानधातौ च कर्मत्वाभा-वेन पचत्योदनं देवदत्तो राध्यत्योदनः स्वयमेवेति कर्मवद्भावो न प्राप्नोतीति वाच्यम् । निवृत्तप्रेषणाप्रक्रियैव सकललक्ष्यसंग्रहात् । न च दृशेः कार्त्स्न्य-मावकतया वहेश्च कर्तृस्थक्रियतया कर्मवद्भावो न प्राप्नोतीति वाच्यम् । पचिभिद्यादिभ्यो वैलक्षण्यस्य दुरुपपादत्वात् । विक्लेदनद्विधाभवनयोरपि कर्त्तृस्थतापत्तौ कर्मवद्भावातिदेशस्य निर्विषयतापत्तेः । तत्र व्यापारांशस्य कर्त्तृस्थत्वेऽपि विक्लित्तिद्विधाभवनरूपे फले कर्मस्थे इति । यदि तर्हि दृशि-

## अणौ कर्मणोऽसम्भवादिति । (कै)

अस्य "कथमत्रात्मनेपदं वार्य्यते"त्यनेनान्वयः ॥ नियमप्राप्तिः गणयति गण इत्युदाहरणस्यावस्थादयेपि चुरादिण्यन्तस्यैव प्रक्रमात् । चुरादिण्यन्तप्रकृतिकहेतुमण्ण्यन्तत्वे तत् सूत्रविषयतया पूर्वपक्षिणोपि तत्रात्मनेपदस्यैवेष्टतया तत्रानेन तन्निवारणमशक्यमिति स्वयमाह

## णेरिति (भा)

इत्यादि । परं त्वेषोक्तिर्विफला । भाष्ये तत्प्रक्रमाभावात् । [1]"चिति स्मृत्याम्" इत्यादि (इत्यादेः) इदित् करणात् अनित्यण्यन्तत्वस्य चुरादीनां ज्ञापनेऽपि तद्विशेषविषयमिति बोध्यम् । वस्तुतस्तु ज्ञापकमेव चिन्त्यम् । [2]टुडुप्रभृतीनामिव तस्यापीदित्वस्योच्चारण-

१ चुरादि-गण-१५३२ ।    २ कुन्दि- । इ । क ।

भृत्यान् राजा । दर्शयते भृत्यै राजा । अत्रात्मनेपदं सिद्धं भवति ॥

शेषत्वेन विवक्षितत्वात् कर्मत्वाभाव' । तस्मात् स्मरति वनगुल्ममिति प्रदर्शनीयम् ॥ स्मरयत्येनमिति । भा । एतदप्युपलक्षणम् । अत्र ह्येनमिति कर्मणः सद्भावात् कर्मवदकर्मकाणामिति वचनात् कर्मवद्भावप्राप्तिर्नास्ति ।

सद्योरपि विषयत्वन्यम्भावौ कर्मस्थाविति तुल्यम् । तस्मादिह वैषम्ये बीजं वक्तव्यमिति चेत् । अत्राऽऽङ्भर्तृहरिः—

"विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता
क्रियाव्यवस्थात्वन्येषां शब्दैरेव प्रकल्पिता"

इति ॥ अस्यार्थः । यत्र क्रियाप्रयुक्तो विशेषो दृश्यते यथा पक्वेषु तण्डुलेषु यथा वा छिन्नेषु काष्ठेषु । तत्र क्रियास्थिता । तेन पच्यते ओदनः छिद्यते काष्ठमिति कर्मवद्भाव' सिद्धः । अन्येषां मते । अन्येषां धातूनां वा शब्दैरेव

माचार्यत्वात्। केवलं "[1]घुषिरविशब्दने" (चुरादिग-१७१७) इति लिङ्गादनित्यण्णन्तल भाष्यशब्दव्युत्पत्तिः। यच्च "याष्ट्याद्दा" इति विकल्पितणिचोऽपि चुरादौ सन्ति तथापि [२]"अणावकर्मकाद्" इत्यत्र हेतुमण् णिच एव ग्रहणसम्भवादिहापि साजात्यात् साह-, चर्याच्च तथैवोचितमिति तत्त्वम् ॥ ननु शेषवैयर्थ्यम् अत आह

## न चानिर्दिष्टेति। (कै)

यद्यपि प्रतियोगिभूतात्मनेपदनिर्देशेनापि प्रतिषेधः शक्यस्तथा-प्यन्यांशानुक्तौ आध्यानार्थात् कदापि तङ् नस्याद् इति विषय-विशेषनिर्देशार्थं कृत्स्नं सूत्रमपेक्षितमिति भावः॥ ननु [३]"अधीगर्थेति" कर्मणि शेषे "वनगुल्मस्येति" षष्ठीसत्वात् कर्मणोऽभावेन नेदमुदा-हरणमत आह

१ अ ७। पा २। सू २३। २ अ १। पा ३। सू ८८।
३ अ २। पा ३। सू ५२।

आत्मनः कर्मत्वे प्रतिषेधः।, वा। आत्मनः कर्मत्वे प्रतिषेधो वक्तव्यः।

नाप्यनेनात्मनेपदस्य कर्मान्तरसम्भवात्। तस्मात् स्मरयति वनगुल्म स्वय-मेवेति प्रदर्शनीयम्॥ भवत्येवं जातीयकानामिति। भा। येषामस्यन्तानां

क्रियाव्यवस्था। शब्देन कर्तृव्यापारस्यैव प्राधान्येनावगमात् कर्तृस्थतेत्यर्थः। उद्देश्यापि क्वचित्कर्मांशस्य क्वचित्तु व्यापारांशस्य इति। उत्सर्गिकं नियामकं बोध्यम्। तदिह दर्शयारोहयाभ्यां विषये न्यग्भूते च विशेषानुपलम्भात् कर्तृस्थ एवेह भावः क्रिया च। उद्देश्यानुरोधाच्च। ,अहं पश्येयम् इति द्रष्टुरिच्छा न तु अयं विषयो भवतु इत्येवमहमुपरि गच्छेयमित्युद्देश्यो न तु

## कर्मोपलक्षणमिति । (कै)

अन्ये तु एतद्भाष्यबलात् सूत्रस्थकर्मपदं फलाश्रयपरं न तु कर्मसंज्ञकमित्याहुः ॥

## एतदपि । (कै)

एनमित्येतद्घटितमुदाहरणमपि । उपलक्षणं तद्रहितोदाहरणस्येत्यर्थः । अकर्मकाण्येवोदाहरणानीति मत्वैव कर्मवद्भावात् सिद्धमिति भाष्यस्य प्रवृत्तेरिति भावः । यद्यपि [१]"गतिबुद्धि" इति सूत्रे ज्ञानसामान्यार्थकानामेव ग्रहणमिति स्मरयतियोगेनाण्यन्तकर्तुः कर्मत्वप्राप्तिस्तथापि तद्भाष्यप्रामाण्यादाध्यानार्थकस्मरतेरपि तत्र ग्रहणं बोध्यमिति तात्पर्य्यम् ॥

## एतदपीति (भा)

भाष्ये । अध्यानार्थानां कर्तृस्थक्रियत्वेन कर्मवद्भावाविषयत्वादिति भावः ॥

---

१ अ १ । पा ४ । सू ५२ ।

---

हन्त्यात्मानम् । घातयत्यात्मेति । स तर्हि वक्तव्यः । न वा ण्यन्तेऽन्यस्य कर्तृ-

---

यत्कर्म तेषां ण्यन्तानां यदा स कर्त्ता तदा कर्तृस्थभावक्रियत्वेप्यात्मनेपदं भवतीत्यर्थः । एवं च ब्रुवता भाष्यकारेण सूत्रमेतदिध्यर्थमित्यर्थादुक्तं भवति।

---

हस्तिनो न तु न्यग्भावो भवत्विति। उपरिगमनरूप एव च व्यापारविशेषो रुहेरर्थः न तु न्यग्भावनमात्रम् । भूमिष्ठे वृक्षस्य शाखां हस्ताभ्यामवनमयत्यपि आरोहतीत्यप्रयोगात् । अत एव "यद्वि तु परं छन्दसि" (८। १। ५६) इत्यत्र भाष्यं रुहिर्गत्यर्थ इति । अत एव चाणौ कर्तुर्णौ कर्मत्वम् । पचिछि-

(गोरणौ यत्कर्म णौ चेत्स कर्त्तानाध्याने । १। ३। ६७) (अ १। पा ३। आ २)

तज्ज्ञापयतीति । (भा)

प्रतिषेधप्रतियोगिसमर्थक सूत्र बोधयतीत्यर्थः ॥

एवं जातीयकानाम् (भा)

इत्यस्य कर्तृस्थभावकानामित्यर्थं पश्यति राजा स्वयमेव इत्यत्रापि स्यादत आह

येषामण्यन्तानामिति ॥ (कै)

कर्त्तृस्थभावक्रियत्वेऽपीति । (कै)

अपिना सकर्मकत्वे ऽपीत्यर्थः । अत एव भाष्ये

एवं जातीयकानाम् (भा)

इति चरितार्थमन्यथा भवत्येषामित्येव वदेत् । साजात्यञ्च कर्मवद्भावप्राप्तियोग्यत्वेनेति बोध्यम् । तदाह

---

त्वात् । वा । न वा वक्तव्य । किं कारणम् । ण्यन्तेऽन्यस्य कर्तृत्वात् । ण्यन्तर-

---

तेनारोह्यते हस्तीत्यादावनेनैवात्मनेपद सिद्ध भवति । तथा हि । रुहिर्गतिविशेषवचन इति "यद्वि तु पर छन्दसी"त्यत्र भाष्यकारो वक्ष्यति । एव च कर्तृस्थक्रियत्वान्नास्यत्र कर्मवद्भाव । एव चारुह्यते हस्ती स्वयमेवेति ये कर्मवद्भाव प्रदर्शयन्ति ते न्याय भाष्य च बाधमाना अवधीरणीया । तथा हि ।

---

योऽस्तु विक्षिप्तिद्विधागमनरूपो विशेष कर्मणि दृष्ट तदुद्देशेनैव च कारकव्यापार इति महदैषम्यम् । एव चारुह्यते हस्तीति कर्मवद्भाव प्रदर्शयन्तो भाष्यन्यायविरोधादुपेक्ष्या इति कैयटः । एतेन—

"अधिगच्छति शास्त्रार्थं स्मरति श्रद्दधाति च
यत् कृपावशतस्तस्मै नमोऽस्तु गुरवे सदा"

## एवं चेति। (कै)

स्वातन्त्र्ये सम्भवति विध्यन्तरगोपत्वकल्पनाऽयुक्तेति भावः॥

## प्रदर्शयन्त इति। (कै)

भागवृत्तिकाराः॥

## न्यायम्। (कै)

"विशेषदर्शनं यत्रे"ति। वक्ष्यमाणभाष्यम् [१]"यद्धि तु परम्" इति सूत्रस्थं तमेव न्यायमाह

## विशेषेति। (कै)

यत्र कर्मभेदेन क्रियाजन्यफले विशेषदर्शनं रूपभेददर्शनं तत्र कर्मस्था यथा पचेः। अन्यत्र कर्तृस्थेत्यर्थः। यद्वा। क्रियाकृतविशेषस्य यत्र कर्त्तरि प्रत्यक्षेणावरणं तत्र कर्तृस्था यत्र कर्मणि तत्र कर्मस्थेत्यर्थः। इदं केषांचिन्मते। अन्येत्वेवं सति क्रियाजन्यश्रमादिकृतवैलक्षण्यं प्रायेण सर्वत्र कर्त्तर्य्यस्तीति पचादेरपि कर्तृस्थ-

---

१ अ ८। पा १। सू ५६।

---

धारयन्ते कर्मान्यो ण्यन्तस्य कर्त्ता। कथम्। द्वावात्मानावन्तरात्मा शरीरा-

---

"विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता
क्रियाव्यवस्थात्वन्येषा शब्दैरेव प्रकल्पिता"

---

इति प्रयोगो व्याख्यातः। न चैवं क्रियते इति न स्यादिति वाच्यम्। यत्नार्थतावादिनामेतद् दोषप्रसङ्गेऽपि भुवादिसूत्रस्थभाष्यानुसारेण करोतेरभूतप्रादुर्भावार्थतामभ्युपगच्छतामस्माकं सर्वसामञ्जस्यात्। एवं च कर्तृस्थभावक्रियेषु कर्मवद्भावाप्राप्तेर्विध्यर्थमिदं सूत्रमिति स्थितं भाष्ये। नाथयते

भावकत्वापत्तिः। तस्माद्यद्धातुवाच्या फलांशरूपा क्रिया कर्त्तृगतापि सम्बन्धविशेषेण शब्देन बुध्यते स कर्त्तृस्थक्रियः। यद्धातुवाच्यः सोऽंशः कर्मस्थ एव न कथमपि कर्त्तृस्थः। सकर्मस्थक्रियो यथा यदादौ इति वदन्ति। तदाह

अन्येषामिति ॥ (कै)

ननु अत्र पक्षे दृशेः कर्मस्थक्रियत्वापत्तिः। विषयत्वापत्तिरूपस्यावरणभङ्गरूपस्य वा फलस्य कर्मण्येव सत्त्वादिति चेत् सत्यं ज्ञानानुकूलव्यापार एव तदर्थं इत्याशयात्। विशेषदर्शनमित्यस्य दर्शिता (श)व्याख्यारीत्याह

---

त्मा च। अन्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुःखे अनुभवति। शरीरात्मा तत् कर्म करोति येनान्तरात्मा सुखदुःखे अनुभवतीति॥

---

इति। विशेषदर्शनेन शब्दार्थानुसारेण वा तादृश्यं कथ्यते क्रियायाः। एतच्च कारकद्वयमारोहणस्य कर्तृस्थतां प्रतिपादयति न कर्मस्थताम्। तथाहि हस्तिनमारोहति वृक्षमारोहति पर्वतमारोहतीत्यादौ कर्मभेदेऽपि मारोहणस्य रूपभेदः प्रतीयते न चैतेषु प्रयोगेषु क्रियाकृतः कर्मणि कश्चि-

---

स्वयमेव इत्यादौ तु कार्यातिदेशपक्षे परत्वात् "कर्मवत् कर्मणा" (३। १। ८७) इत्येवात्मने पदम्। शास्त्रातिदेशे तु भावकर्मणोरित्येतदपेक्षया परत्वात् "णेरणा" दिसूत्रेणेत्यवधेयम्। यदि तु अणौ ये कर्तृकर्मणी तद्भिन्नकर्मनिरूपितकर्मणोऽभिप्रेता स्यात्तर्हि सकर्मकाणां मध्ये तत्सूत्रोदाहरणतापत्तौ कर्मस्थक्रिया अप्युदाहरणं स्युः। न हि तथातिदेशः सुलभः। कर्मवत्कर्मकार्याणिमिति वक्ष्यमाणत्वात्। तथा नियमार्थत्वपराणां यकृचिणो-

## कर्मभेदेऽपीति ॥ (कै)

## नारोहणस्य । (कै)

न तज्जन्यफलस्य ॥ द्वितीयव्याख्यायामाह

## नचैतेष्विति । (कै)

एवं निर्वर्त्त्ये विकार्य्ये कर्मणि निर्वृत्तिविकारलक्षणः कर्मणि विशेषः ॥ प्राप्ये तु न ।

"क्रियाकृतविशेषाणां सिद्धिर्यत्र न लभ्यते
दर्शनादनुमानाद्वा तत् प्राप्यमिति कथ्यते"

इति लक्षणादिति भावः ॥ अन्येषां मतेऽपि कर्मस्थक्रियत्वं निराकरोति

## धातुना चेति ॥ (कै)

नन्वेवं सति धात्वर्थतावच्छेदकफलाश्रयत्वाभावाद् हस्तिनं कर्मत्वानापत्तिरत आह

---

द्विशेषो दृश्यते । धातुना च कर्तृगतैव क्रियाप्रतिपाद्यते न कर्मगता । केवलं कर्मणः कारकत्वादवश्यं क्रियया भाव्यमिति क्रियानुमीयते । सर्वाणि हि

---

प्रतिषेधार्थं तु इत्यादि भाष्यवार्त्तिकग्रन्थानामप्यसामञ्जस्यं स्यादिति दिक् । तस्मादिह अस्मदुक्तमेव वाक्यार्थत्रयं मुनित्रयसम्मतम् । अयादित्यन्यासकारहरदत्तकैयटादिसकलग्रन्थकाराणामिह महानेव पूर्वापरविरोधो विपश्चिद्भिरुद्भाव्य । अस्मदुक्तिस्तु मात्सर्य्यमुत्सार्य्य परिभावनीयेत्यलं बहुना । यत्तु "करेणुरारोहयते निषादिनम्" इति माघे प्रयुक्तं तत् 'णिचश्च' (१।३।७४) इति सिद्धम् । एतेन

"स सन्ततं दर्शयते गतस्मयः
कृताधिपत्यामिव साधु बन्धुताम्"

वक्तव्य इति । (कै)

अयं भावः । न्यग्भवनानुकूलव्यापारस्य हृञर्थत्वे तदनुकूलतयाऽङ्कुशेन गजं ताडयत्यध्यारोहतीति प्रयोगापत्तिः । उपरिगमनमपि धात्वर्थश्चेत् तदेवास्तु तावतैव हस्तिनः कर्मत्वोपपत्तिः । किं न्यग्भवनेनेति उपरिगमनस्य सम्बन्धविशेषेण कर्तर्यपि सत्त्वान्न कर्मस्थक्रियत्वमिति भाव ॥

कर्तृगतैव (कै)

इत्यस्य कर्तृगतापीत्यर्थः ॥

न कर्मगता (कै)

इत्यस्य न कर्मगतैवेत्यर्थः ॥ ननु तन्न्यग्भवनं विनोपरिगमनमसम्भवि इत्यत उक्तम्

केवलम् (कै)

इत्यादि ॥ अत एव हरिणापि

"न्यग्भावनं न्यग्भवनं रुहौ शुद्धे प्रतीयते"

इत्येवोक्तम् न तु रुहिणा ॥

---

कारकाणि स्वं स्वं व्यापारमनुतिष्ठन्ति प्रधानक्रियां सम्पादयन्ति । बहुवक्तव्यमयमर्थं किञ्चित्तु प्रकृतोपयोगादुक्तमिति प्रकृतमनुसराम ॥ दर्शयते भृत्यान् राजेति । भा । ननु कर्मान्तरसद्भावादचात्मनेपदेन न भाव्यम् ।

---

इति व्याख्यातम् । वन्धुता तं पश्यति तां दर्शयते । यद्वा । वन्धुता छत्राधिपत्यामिव लोकं पश्यति तां दर्शयते इत्यर्थः । आद्ये वन्धुता यथौ कर्त्री । द्वितीये तु यथौ सा कर्म । उभयथापि णौ कर्मत्वं निर्विवादमेवेति दिक् । णेरिति किम् । आरोहतीति वाच्यम् । निवृत्तप्रेषणान्माभूत् । न च णौचेदिति वाक्यशेषे श्रुतत्वाण्णेरेव । भविष्यतीति वाच्यम् अणाविवस्यापि

प्रतिपाद्यते इति । (कै)

नन्विति । (कै)

उपक्रमस्थकर्मान्तरनिवृत्तिपरवाक्येनाकर्मकाणामेवैतदुदाहरणत्वा.गतेरिति भावः ॥

अस्मादेवोदाहरणादिति । (कै)

एवं जातीयकानाम् (भा)

इत्युक्तिपराच्च ।

यस्मात्णेः प्राक् कर्मकर्त्ता वा (भा)

इति भाष्याच्चेत्यपि बोध्यम् ॥

प्राक् कर्मकर्त्ता वा (भा)

इत्यनेन प्राक्स्थितकर्मकर्त्रैवैतदात्मनेपदोपयोगित्वं बोध्यते तच्च कर्तृकर्मातिरिक्तकर्माभावबोधने एवेत्याहुः ॥

कर्तृकर्मणी इति । (कै)

"कर्त्तरि कर्म" इत्यतः कर्तृग्रहणमनुवर्त्य प्रथमया विपरिणमय्य यच्च यच्च यदित्येकशेषेणायमर्थो लब्धः ॥

---

उच्यते । अस्मादेवोदाहरणाद्भाष्यकारस्यायमभिप्राय ऊह्यतेऽण्यन्तावस्थाया ये कर्तृकर्मणी तदतिरिक्तकर्मान्तरसद्भावे आत्मनेपदं न भवति यथा स्यन-

---

श्रुतत्वात् । किं चोत्तरार्धमवश्यं णेरिति वाच्यमेव । तदिहैव स्पष्टार्थमुक्तम् । हेतुमण्णिश्च ग्रहणार्थं च । भीस्म्योर्हेतुभय इत्यस्येव सम्भवात् । तेन गणयते गणः स्वयमेवेति सिद्धम् । गणयतिर्हि विभज्य भागशोऽवस्थापने वर्तते । तथाच चर्मस्वभावकारणाण्णिच्प्रेषणाद्धेतुमण्णौ पुनः प्रेषणाभ्यासे सत्यात्मनेपदसिद्धम् णेरिति हेतुमण्णिचा सन्निधानादणावित्यत्रापि तस्यैव ग्रहणा-

## प्रत्युदाहरणं युज्यते इति । (कै)

सिद्धान्ते इति शेषः ॥

## स्थलमारोहयति (भा)

इत्यत्रापि स्थलस्य कर्तृकर्मातिरिक्तकर्मणः सत्वात् ॥ भाष्ये

## आत्मनः कर्मत्वे प्रतिषेध इति । (भा)

अण्यन्ते कर्मण आत्मनो ण्यन्ते कर्तृत्वेनाण्यन्तावस्थास्थकर्तृकर्मातिरिक्तकर्माभावेन चात्मनेपदस्यैतत्प्राप्तस्य प्रतिषेधो वक्तव्य इत्यर्थः ॥ भाष्योदाहरणे आत्मा कर्म । अहं काण इत्यादि व्यवहारेण शरीरेऽपि लोकानामात्मत्वप्रत्ययात् शरीरात्मा इति न विरुद्धम् । अन्तरात्मा कर्त्ता शरीरात्मनि कर्तृत्वस्य लौकिकैरप्यनभ्युपगमादिति भावः ॥ नन्वन्तरात्मा पुरुषः सोऽप्यकर्त्तैव साङ्ख्यादिमतेऽत आह

---

मारोहयति मनुष्यान् इति । इह त्वण्यन्तावस्थाया कर्त्तृया भृत्याना णौ कर्मत्वमिति भवत्येवात्मनेपदम् । एवं च स्मरत्येनं वनगुल्मः स्वयमेवेति कोकिलस्य कर्मत्वेऽपि प्रत्युदाहरणं युज्यते ॥ आत्मनः कर्मत्वे इति । भा । यदैकमेव वस्तु बुद्धा विभज्यकर्मत्वेन कर्तृत्वेन च विवक्ष्यते तदा प्रतिषेधः

---

चुरादिणौ यत्कर्म तत्कर्तृकाद्धेतुमण्ण्यन्तादपि सिध्यतीति । यत्तु हस्तिपकता गमयतीत्येव रूपमवस्थाचतुष्टयेऽप्युदाह्रियते । तत्र संख्यानिमित्तस्य परिच्छेदस्य ज्ञानविशेषात्मतया कर्तृस्थस्य धातुवाच्यतामाश्रित्य कर्मवद्भावाप्रवृत्त्या द्वितीयावस्थायां परस्मैपदमुपपादनीयम् । चतुर्थावस्थाया तु परस्मैपदमशुद्धमेव । "णेरणावि" त्यत्रापि "अणावकर्मकाद" (१ । ३ । ८८) इत्यत्रैव हेतुमण्णिच एव ग्रहणस्य न्याय्यत्वात् । तथैव भाष्ये स्थितत्वाच्च । भागशोऽवस्थापन परत्वे तु द्वितीयावस्थायामप्यात्मनेपदमिति विशेषः । कर्मवद्भावस्य दुर्वारत्वात् यक् चिणौ तु णिश्रन्थ्योत्यादि निषेधान्नस्त इति दिक् । णौचेदिति किम् । नियन्तृप्रेमणाणौ व्यारोहयन्ति हस्तिपका इति तृतीय-

साङ्ख्येति ॥ (कै)

तस्यैवेति। (कै)

तन्मते पुरुषस्य पुष्करपलाशवन्निर्लिप्तत्वेन कर्तृत्वाद्यनाश्रयत्वादिति भावः।

पुरुषस्य। (कै)

जीवस्य ॥ भाष्ये आत्मद्वयमत्त्वेमानमाह

अन्तरात्मा (भा)

इत्यादिना ॥

तत्कर्मेति। (भा)

धर्माधर्मरूपं यत् पूर्वसञ्चितकर्म तत्फलं पादादिसौष्टवाद्यनुभवतीति लौकिकव्यवहारात् पूर्वकृतं कर्मनामाधिरूपेण बाधते इति व्यवहाराच्चेति भावः। शरीरात्मनः कर्म चेष्टादिरूपं सुखदुःखजनकम् एकस्यैवात्मनः कक्षान्तरे कर्तृत्वं तनमिधानाच्चेति सिद्धान्ताशय ॥

---

इत्यर्थः ॥ न चेति। भा। वस्तुत एवात्र चात्मभेदो न त्वेकस्यैव कर्मत्वं कर्तृत्वं चेत्यर्थः ॥ अन्तरात्मेति। भा। साङ्ख्यपक्षेऽन्तःकरणमन्तरात्मा तस्यैव कर्तृत्वासद्भावात् पुरुषस्याकर्तृत्वात् ॥ नैयायिकादीनां तु मते पुरुषस्य कर्तृत्वात् स एवान्तरात्मा विवक्षित ॥ शरीरात्मा सुखदुःखे इति। भा। शरीरस्याचेतनत्वात् सुखदुःखहेतुभ्यां शरीरं सवध्यत इति व्याख्येयम् ॥

---

कक्षाया मा भूत्। स्मरति हि णौ चेद् ग्रहणे अणन्तादवस्थामेव कर्मत्वं कर्तृत्वं च लभेत। न चैकस्योभयरूपता बाधिता इति वाच्यम्। प्रथमावस्थायां कर्मणो द्वितीयावस्थाया कर्तृत्वस्य निर्विवादत्वात्। अनाध्याने किम्। स्मरति वनगुल्मं कोकिलः। ततस्तुर्यावस्थायां स्मरयति वनगुल्मं। उत्कण्ठापूर्वकस्मृतौ विषयो भवतीत्यर्थः। स्मृ आध्याने। घटादि ॥

# [1]स्वरितञितः कर्त्रभिप्राये क्रियाफले।

## १। ३। ७२॥



ननु राजा प्रयाति[2] प्रजाप्रयातीत्यादौ क्रियाफलस्य जयस्य कर्तृगामित्वतदभावयोर्दर्शनेन यात्यादिव्यावृत्तये "स्वरितञित" इत्यस्यावश्यकत्वेन भाष्यमनुपपन्नमत आह

२ सेनाप्रयाति । इ॥

१ स्वरितञितः कर्त्रभिप्राये क्रियाफले । १ । ३ । ७२॥ स्वरितञित इतिकिमर्थम् । याति वाति द्राति प्साति । स्वरितञित इति शक्यमकर्तुम् । इह कस्मान्न भवति याति वाति द्राति प्साति इति । कर्त्रभिप्राये

स्वरितञितः कर्त्रभिप्राये क्रियाफले । १ । ३ । ७२ ॥ इदमात्मनेपदं संविधानवृत्तिभ्यो धातुभ्यो भवतीति केचिद्व्याचक्षते । पचते पाचयतीत्यर्थः । यजते याजयतीत्यर्थः । अनेकार्थत्वाद्धातूनां प्रकृतिरेव यदा संविधाने वर्त्तते

स्वरितञितः कर्त्रभिप्राये क्रियाफले । १ । ३ । ७२ ॥ स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात् क्रियाफले कर्तृगामिनि सति । यजते । सुनुते ।

स्वरितञित. कर्त्रभिप्राये क्रियाफले । १ । ३ । ७२॥ यत् क्रियाफलं कर्तृगामि तद्वृत्तिधातोरात्मनेपदमिति सूत्रार्थः ॥ स क्रियाभेदः स्व यज्ञं यजते, यजतीत्यादौ वाक्यं स्वादिपदेनापि गम्यते। "विभाषोपपदेनेति" (१ । ३ । ७७) तत्र पदद्वयमित्यर्थं हेलाराज । अत एवोक्तं "स्वरितञित" इत्यत्र भाष्ये "स्वरितञित इति शक्यमकर्तुम् । यात्यादिषु कस्मान्न भवति

## इदमिति। (कै)

अत्र केचित्। क्रिया कृत्स्नधात्वर्थः तत्फलके कर्त्तुः प्रयोजककर्त्तुरभिप्राये अभिधायमूलत्वे प्रयोजककर्तृव्यापारे आत्मनेपदमित्यर्थादिति भावः॥ "संविधानं" कृत्स्नधात्वर्थप्रवृत्त्यनुकूलः प्रवर्त्तनाख्यो व्यापारः। "यजेते" त्यादौ च ऋत्विक् प्रवृत्त्यनुकूलो यजमानव्यापार एव धात्वर्थः। सर्वावयवकक्रियाप्रवृत्त्यनुकूलव्यापार एव संविधानशब्दवाच्यः। तेन यजेत पशुकाम इत्यादौ यजनान्तर्गतप्रोक्षणसंज्ञपनरूपहोतृव्यापारप्रयोजकव्यापारकर्तुरध्वर्योरपि पशुनासम्बन्धः स्यादित्यपास्तम्। तद्व्यापारस्य यजमानव्यापारवत् यावद्यज्यर्थप्रवृत्त्यनुकूलत्वाभावेन संविधानत्वाभावादित्याहुः॥

---

क्रियाफले इत्युच्यते। सर्वेषां च कर्त्रभिप्रायं क्रियाफलमस्ति। त एवं विज्ञास्यामः। येषां कर्त्रभिप्रायमकर्त्रभिप्रायं च क्रियाफलमस्ति तेभ्य आत्मनेपदं भवतीति। स चैतेषां कर्त्रभिप्रायं चाकर्त्रभिप्रायं च क्रियाफलमस्ति।

---

तदा तस्य द्योतकमात्मनेपदं भवतीति। यदा तु प्रत्ययानभिहितं संविधानं तदा तदभिधानाय णिजुत्पद्यते पाचयतीति। यदा "णिचश्च" (१।३।७४) इतिण्यन्तादात्मनेपदं भवति तदा द्वितीये सविधाने ण्यन्तस्य वृत्तिः परिकल्प-

---

कर्त्रभिप्राये किम्। यजन्ति याजकाः। इत्यन्ति। दक्षिणादि तु न फलम्॥
उक्तं हि हरिणा—

"यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः।
तत्प्रधानफलं तेषां न लाभादिप्रयोजनम्" इति।

---

कर्त्रभिप्रायक्रियाफल इत्युच्यते सर्वेषां च कर्त्रभिप्रायं क्रियाफलमस्ति त एवं विज्ञास्यामः। येषां कर्त्रभिप्रायमकर्त्रभिप्रायं च क्रियाफलमस्ति तेभ्य आत्म-

परे तु संविधानं सामग्रीसङ्घटनरूपमित्याहुः ॥ ननु विक्लित्त्याद्यनुकूलव्यापार एव पचत्याद्यर्थो न तु तन्निमित्तं संविधानमपीत्यत आह

अनेकार्थत्वादिति ॥ (कै)

तस्य द्योतकमिति । (कै)

अनेन तस्य विशेषणत्वं सूचयति । संविधानविषय एककर्तृकः पाक इत्यर्थः ॥ परेत्वनेकार्थस्य धातोरयमेवार्थ इति बोधनमेव द्योतकत्वं तेन विशेष्यत्वेऽपि न क्षतिरित्याहुस्तदाह

यदात्विति ॥ (कै)

"हेतुमतीति" ( ३। १। २६। ) प्रत्ययार्थनिर्देश इत्येव सिद्धान्तोऽत एव तदाश्रयस्यैव तत्र कर्तृत्वं तदाह

---

तथा जातीयकाः खल्वाचार्येण स्वरितञितः पठिता ये उभयवन्तः येषां कर्त्रभिप्रायं चाकर्त्रभिप्रायं च क्रियाफलमस्ति । तथाभिप्रग्रहणं किमर्थम् । स्वरितञितः कर्ता ये क्रियाफल इतीयत्युच्यमाने यमेव सम्प्रत्येति क्रियाफलं

---

नीया यदा राजा पाचयते इति । कर्त्रभिप्रायक्रियाफल इत्यनेन संविधानलक्षण एव क्रियाविशेष उपलक्ष्यते । क्रोशीत्थ वपते धत्ते चिमुत इति च

---

पचा । पाकः । भित्यादय् । केचित्तु प्रयोजकव्यापारवृत्तिभ्यो धातुभ्यस्तद्द्योतकमात्मनेपदमनेन विधीयते । कुरुते । कारयतीत्यर्थ । कारयत

---

नेपदं भवतीति । न चैषां कर्त्रभिप्रायमकर्त्रभिप्रायं च क्रियाफलमस्ति । तथा जातीयकाः-खल्वप्याचार्येण स्वरितञित इति पठिता' । ये उभयवन्तः । येषां कर्त्रभिप्रायमकर्त्रभिप्रायं च क्रियाफलमस्तीति" । अनेन च भाष्येणाकर्त्रभिप्रायक्रियाफलाभावप्रयुक्तो यात्यादिपूभयाभावो लभ्यते । ननु यात्या-

तद्भिधानायेति । (कै)

किं च यात्यादीनां संविधाने द्व्यभाववादिनां तत्र णिजना-पत्त्या णिज्विधायके वाचकता पच एवावश्यक इत्याशयः ( इत्या-शयः । द ) ॥ नन्वेव ण्यन्तादात्मनेपदं न स्याद् णिचा संविधानस्य बोधितत्वादत आह

यद्देति ॥ (कै)

तस्य । (कै)

ण्यन्तस्य ॥ नन्वयमर्थः सूत्रानारूढोऽत आह

---

तत्रैव स्यात् । लूञ् । लुनीते । पूञ् । पुनीते । इह न स्यात् । यज् यजते । वप् वपते । अभिप्रायग्रहणे पुनः क्रियमाणे न दोषो भवति । अभिरामिमुख्ये

---

शिष्टप्रयोगेषु ह्यर्थोऽवगम्यते । स्वरितञित एव संविधाने शब्दशक्तिस्वाभा-व्यादवर्त्तन्ते नान्ये धातव इति स्वरितञिद्ग्रहणं भाष्ये प्रत्याख्यातम् । अन्ये-त्वाहुः । स्वार्थं य क्रियामारभते तत्रात्मनेपदं परार्थारम्भे तु परस्मैपदम् ।

---

इत्यत्र तु प्रयोजकव्यापारद्वयमेवार्थः । णिजन्तात्सिचि यथा कर्त्रभिप्राय इति सूत्रांशेऽपि कर्तृपदस्य हेतुकर्तृपरत्वाद्धेत्वर्थतात्पर्यक एवेत्याहुः । उक्तञ्च हरिणा—

"क्रियाप्रवृत्तावाख्याता कैश्चित् स्वार्थपरार्थता ।
असतो वा सतो वापि विवक्षितनिबन्धना" ॥

---

दिष्यपि सेना प्रयाति मित्रार्थं तीर्थानि गच्छति इत्यादौ पराभिप्रेतं अय-धर्मादिफलमस्तीति चेन्न । भाष्ये 'च' श्रवणात् कर्त्रभिप्रायमेवाकर्त्रभिप्राय-मेव च क्रियाफलमस्तीत्यर्थात् । इदं चोभयाभिप्रेतमिति न तथेत्यभिप्रायः । तत्र यजेर्ऋत्विग्व्यापारवचनत्वे कर्त्रभिप्रेतत्फलाभावः । यजमानस्य सदा

( स्वरितञितः कर्त्रभिप्राये क्रियाफले ।
१।३।७२।)

## कर्त्रभिप्राये (कै)

इत्यादि ॥ तदुक्तम्—

"कर्त्रभिप्रायता सूत्रे क्रियाभेदोपलक्षणम् ।

तथा भूता क्रिया सा हि तत्कर्त्ता फलभाग्यतः" इति ॥ (हरिः)

"क्रियाभेदः"। सविधानलक्षणः ॥ "तत्कर्त्ता"। संविधानकर्त्ता ॥

"केषां चित् कर्त्रभिप्राये णिचा सह विकल्पते ।

आत्मनेपदमन्येषां तदर्था प्रकृतिर्यया" ॥

इति च केषां चिद् धातूनां स्वरितञिताम्। केषां चिदादिनामिति च। एवमन्येषामित्यपि बोध्यम् ॥ विकल्पाङ्गीकारे शिष्टप्रयोगान् प्रमाणत्वेन दर्शयति

## क्षौणीघ्रेति। (कै)

"वपते" (कै) इति पाठ ॥ अत्र पक्षे प्रत्याख्यानभाष्यं योजयति

---

वर्त्तते। प्र ब्यादिकर्मणि। तेन यं चाभिप्रैति य चाभिप्रैष्यति यं चाभिप्रागात्तत्र सर्वत्राभिमुख्यमात्रे सिद्धं भवति। कर्त्रभिप्राये क्रियाफले इति

---

सा च स्वार्थपरार्थता विवक्षा निमित्ता लौकिके प्रयोगे स्वरितञिद्विषयैव न यात्यादिविषयेत्यत्रापि पक्षे स्वरितञिदग्रहणस्य प्रत्याख्यानम्। एवं मध्य-

---

केषांचित् कर्त्रभिप्राये णिचा सह विकल्पते ।

आत्मनेपदमन्येषां तदर्था प्रकृतिर्यया ॥

---

कर्तृत्वाभावात्। यजमानव्यापारवचनत्वे तदलम्। उभयवचनत्वे स्वामिदासाविति वक्ष्यमाणप्रयोग इति तदाशयः। ननु यजादीनां विक्रियादिवचनत्वात् कथं प्रतिविधानमर्थः। किंच तदर्थत्वाभावे कर्त्रभिप्रेतक्रियाफलाप्रसिद्धिरत आह

## स्वरितञित एवेति ॥ (कै)

नन्वयं पक्षो न भाष्यसम्मतः प्रत्याख्यानभाष्ये सर्वेषां च कर्त्रभिप्रायं क्रियाफलमस्ति तस्मादुभयवद् (त्त) आत्मनेपदं नचैतेषामुभयमस्तीत्युक्तेः। तत्र सर्वेषां कर्त्रभिप्रायं क्रियाफलमस्तीत्युपक्रमादुभयाभावोऽकर्त्रभिप्रायत्वाभावप्रयुक्तो लभ्यते। असंविधाने एषां वृत्तिर्नास्तीति वक्तुमशक्यं देवदत्तो गच्छतीत्याद्यनापत्तेः। तस्मादुत्तरव्याख्यैव युक्ता। तत्र हि यात्यादौ तत्फलस्य सर्वदा कर्तृगामित्वमेव विवक्षितं न तु परगामित्वमित्यस्य सुवचत्वात् प्रतीयते च तथैव यात्यादौ। एवं च "न चैतेषां कर्त्रभिप्रायं च" (भा) इत्यादिप्रतीकस्थकैयटोऽपि चिन्त्य एव॥ "चिनुते" इत्यादिप्रयोगास्त्वन्तर्भावितण्यर्थतयोपपाद्याः। प्रकरणादिकं च तात्पर्यग्राहकम्। कदाचित् परस्मैपदेऽपि तत्प्रतीत्या तस्यावश्यकत्वाच्च। न

---

किमर्थम्। पचन्ति भक्तकाराः। कुर्वन्ति कर्मकराः। यजन्ति याजकाः। कर्त्र-

---

भिप्रायैः इष्यतीति "विभाषोपपदेन प्रतीयमाने" (१।३।७७) इति पक्षे चात्मनेपदाभाव। स्वामिदासौ पचत इति क्रियामात्र विवक्षायां परस्मैपदम्।

---

क्रीणीष्व पचते धत्ते चिनोति चिनुतेऽपि च।
व्याप्तप्रयोगा दृश्यन्ते येषु स्वर्थोऽभिधीयत" इति॥

---

"संक्लिष्टं भवादीनां कश्चिदर्थः प्रतीयते।
तन्निमित्तं यथान्यापि क्रियाधिश्रयणादिका"॥

स्व पचे प्रधानार्थो यासौ तण्डुलानां विक्लित्तिः। अथेदानीं तदभिसन्धिपूर्वकमध्येषणं वा प्रेषणं वा युक्तं यत्स्वैं पच्यर्थः स्यात्। वाढं युक्तम् इति

च सेना प्रयातीत्यादौ यात्यादीनामपि पराभिप्रेतफलमस्त्येवेति वाच्यम् । भाष्ये "च" श्रवणेन कर्त्रभिप्रायमेवाकर्त्रभिप्रायमेव च क्रियाफलमस्तीत्यर्थात् । अत्र जयादिफलमुभयाभिप्रायमिति न तथेति भावात् इत्यरुचेराह ।

## अन्येत्वाहुरिति ॥ (कै)

## स्वार्थं य इति । (कै)

'य: स्वार्थं क्रियामारभते तत्र तद्विषये प्रयोगे इत्यर्थः । सूत्रे "कर्त्तृगामित्वं" कर्त्तुपकारकत्वं न तु संयोगः समवायो वा । चित्रया

---

भिप्राये क्रियाफल इत्युच्यमानेऽपि अत्र प्राप्नोति । अत्रापि क्रियाफलं कर्तार-मभिप्रैति । याजका यजन्ति गा लप्स्यामह इति । कर्मकराः कुर्वन्ति पादिक-

---

यदा तु स्वामिगतो धर्मो दास आरोप्यते तदा स्वामिदासौ पचेते इति आत्मनेपदं भवत्येव ॥ सर्वेषां चेति । भा । सर्वत्र संविधानस्य संभवात्सर्वत्र च

---

असतौ च इत्यनेन कमलवनोद्घाटनं कुर्वते य इत्यादयः प्रयोगाः समर्थिताः । तथापि स्वार्थता विवक्षायाः सम्भवात् । ण्यर्थस्य वाचकं

---

"हेतुमति च" ( ३। १। २६ ) इति सूत्रभाष्योक्तेः । संविधानमपि सामग्री-सङ्घटनरूप ण्यर्थः । यथा विक्लित्यर्थस्यापि पचेरधिश्रयणादि: कर्तृव्यापारोऽर्थो देवदत्तः पचतीति । अन्यथा देवदत्तस्य कर्तृत्वानापत्तिः णिच् तु न । नहि संविधानमेव णिजर्थः । अपि तु तत्पूर्वकं प्रेरणम् । यत्र सति प्रयोजक इत्युच्यते संविधानं कुर्वन्नपि न यावत् प्रेरयति न तावत् प्रयोजक इत्युच्यते इति हेलाराजः । भिक्षा वासयति कारीषोऽग्निरध्यापयति इत्यादावपि प्रयोजकत्वारोपो बोध्यः । तूष्णीमासीनो यज्ञसमर्थान्याचरति

यजेत पशुकाम इत्यादौ तदभावात्। एवं च फलद्वारा क्रियैव कर्त्रर्थेति फलितम्। अत्र पक्षे क्रियाफलं "श्रुत्या" "लोकतो" वा यदुद्देशेन क्रियाप्रवृत्तिरवगता तत्। यथा पचादौ भोजनादि- 'लोकतो'ऽवगतम्। यज्यादौ च स्वर्गादि "श्रुत्या" ऽवगतमिति बोध्यम्॥

## परार्थेति। (कै)

याज्यादिषु तु परार्थत्वविवक्षैव नास्ति इत्यतो न दोषः। स्वार्थत्वपरार्थत्वोभयविवक्षावतां धातूनां स्वार्थत्वविवक्षायां तङानौ इति सूत्रार्थः। उभयं च स्वरितञित्त्वेनेति न दोषः। विवक्षा- *निमित्तस्वार्थपरार्थतेत्यन्वयः। "विवक्षा" इत्यनेन "कमलवनोद्*

---

महर्लघ्यामह इति। एवं तर्हि कर्त्रभिप्राये क्रियाफले इत्युच्यते सर्वत्र च कर्तारं क्रियाफलमभिप्रैति। न चान्तरेण यजिं यजिफलं वर्षं वा वपि फलं

---

स्वार्थानुष्ठान संभवादितिभावः॥ येषामिति। भा। संभवे व्यभिचारे च सति प्रकारान्तरव्यवच्छेदेन विशिष्टे कार्यविधानाय विशेषनिर्देशः क्रियते इति भावः॥ न चैतेषामिति। भा। याज्यादयः संविधाने वर्तितुं न शक्नुवन्तीत्यर्थः।

---

द्योतकं वा आत्मनेपदमिति मतद्वयं संगृहीतं केषांचिदित्यादिना श्लोकेन॥ चिनोति चिनुत इति। चिनोति चाययति चेति क्रमेणार्थ॥ इति कौस्तुभः॥

---

*सोऽपि वाक्यादिप्रयोजक इति भाष्यात् तत्समर्थाचरणमात्रेण तत्प्रयोजकत्वा-* दोषः इति तदर्थः। अत एवायं यज्ञसम्भारान् सङ्घटयति कं वा प्रेरयिष्य- त्यार्त्विज्यायेति न जानीम इति व्यवहारः॥ ननु "स्वरितञित" इति सूत्राद् अयमर्थः कथं लभ्यते। तत्राह

घातनं कुर्वते ये" इति सिद्धम् ॥ अत एव स्वामिदासौ पचत इत्यत्र क्रियामात्रविवक्षायां परस्मैपदमिति वक्ष्यते कैयटेन। तेन चैतस्य शाब्दबोधे भानमिति लभ्यते। कर्तृगामित्वविवक्षाभावमात्रं परस्मैपदनिमित्तमिति च आत्मनेपदादिसमभिव्याहृतधातोः स्वरितञितः कर्तृगतफलजनकक्रियादौ लक्षणेति बोध्यम्। केचित्तु नेदं शाब्दबोधविषयः अपि तु पश्चात्तनमानसबोधविषयः। तथैवानुभवात्। किमर्था क्रिया इति विचारे क्वचित् परार्थफलकत्वं मनसा बुध्यते। एवं चैषु परार्थत्वमेव परस्मैपदनिमित्तं कोटिद्वयातिरेकेण तृतीयकोटेरभावात्। अत एव भाष्येऽकर्त्रभिप्रायमित्युक्तम्। न तु कर्त्रनभिप्रायमिति। स्वामिदासौ पचत इति तु दासधर्मस्य स्वामिन्यारोपात् साध्यम्। स्वामिगतस्य धर्मस्य दासे आरोपेणात्मनेपदवत्

---

लभन्ते। याजका पुनरन्तरेणापि यजिं गा लभन्ते भृतकाश्च पादिकमिति। इति महाभाष्यम्।

---

अथवा स्वाभिधेयभावत्वतयो यात्यादयो नैषां स्वार्थताविशिष्टक्रियावाचित्वसंभव। तथा जातीयका इति। भा। प्रकारमात्रे फल विधाय प्रकारवतो जातीयर् विहित। यथेति। भा। कर्त्रामेति प्राप्नोतीति कर्त्रायमिति

---

"कर्त्रभिप्रायता सूत्रे क्रियाभेदोपलक्षणम्।
तथा भूता क्रिया सा हि सत्कर्तृफलभाग् यत"।

कर्त्रभिप्रायक्रियाफलग्रहणेन संविधानक्रियानिर्दिश्यते। मध्यन्दिनं दृष्ट्वा वाचं विसृजेदित्यत्र मध्यन्दिन दर्शनेन कालविशेषनिर्देशवत्। यत एवं रूपक्रियाया कर्तृफलेन युज्यते। न ह्यसविदध्यायादि तत्फलं स्वर्गादिश्रुते।

कर्त्रभिप्रेतत्वादिकं चारोपितानारोपितसाधारणं मानसबोधविषयत्वादिहेतुरत एव परार्थारम्भे तु परस्मैपदमित्युपक्रमे कैयटेनोक्तम्। वस्तुतः "कर्त्रभिप्रायक्रियाफले" इत्यनेन संविधानमुपलक्ष्यते तद्वाचकाद्धातोरात्मनेपदम्। विक्लित्त्यनुकूलसाधनविनियोगार्थत्वे तु परस्मैपदम्। एतच्च हरिग्रन्थे स्पष्टमितिमञ्जूषायां निरूपितम्। भाष्यस्याप्ययमेव तात्पर्य्यमित्याहुः॥ नन्वेवं विवक्षातिप्रसक्तेत्यत आह

स्वरितञिद्विषयेवेति॥ (कै)

ननु "एवं पञ्चभिर्हलैः कृषति" इत्यत्र संविधानप्रतीतेरात्मनेपदं स्यादत आह

पञ्चभिरिति। (कै)

पञ्चभिर्हलैरित्युपपदगम्यत्वात् तस्येति भावः॥ ननु स्वामिदासयोर्युगपत् कर्तृत्वविवक्षायां स्वार्थवृत्तिताप्रयुक्तात्मनेपदस्य दासेनान्वयाभावात् परार्थत्वप्रयुक्तपरस्मैपदस्य स्वामिनान्वयात्। अप्राप्ता ईदृशे विषये पचेस्तिङन्तस्य प्रयोग एव न स्यादत आह

---

सिध्यत्वेव विवक्षितोऽर्थ इति प्रश्न। यमेवेति। भा। केचिदाहुः। कर्मान्तकालविवक्षा स्यादिति। तदयुक्तम्। कालसामान्ये चञ् विधानात्। तस्मादयमर्थः। द्विविधं यागादिफलं दृष्टमदृष्टञ्च। दृष्टमत्र पुनरदृष्टञ्चुवधा-

---

तत्र कार्यभूतफलसम्बन्धेन कारणभूतक्रियाविशेष उपलक्ष्यते। तद्वाचकाद्धातोरात्मनेपदमित्युक्तं भवति। संविधानोपलक्षणं च क्रियाफलं किं तत्राह

"यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः।
तत्प्रधानं फलं तेषां न लाभादिप्रयोजनम्"॥

**स्वामिदासाविति ॥ (कै)**

**क्रियामात्रेति । (कै)**

वस्तुत उपपत्त्यन्तरमत्रोक्तम् ॥

**सर्वंचेति । (कै)**

सर्वधातुष्वित्यर्थः ॥ भाष्ये

**सर्वेषाम् (भा)**

इत्यस्यापि सर्वधातूनामित्यर्थः ॥

**सम्भवे (कै)**

इत्यादि । एवं च यत्र धातौ "कर्त्रभिप्राय" इत्यस्य व्यावर्त्य-संभवस्तत्रैवास्य प्रवृत्तिरिति भावः ॥ "अकर्त्रभिप्रायम्" इत्यस्य कर्तृभिन्नाभिप्रायमित्यर्थः । एवं च यात्यादीनां सर्वथा कर्त्रभिप्रेत-मेवेतिव्यावर्त्याभावात् तेषां नोदाहरणत्वमितिभावः ॥

---

दिकम् । अदृष्टं स्वर्गादि । तत्रापूर्वं प्रत्यासन्नमवश्यं भावीतिप्रधानम् । इत-रत्तु विधुरप्रत्ययोपनिपातसम्भवे व्यभिचारसम्भवादिप्रत्यासत्त्याऽप्रधानमिति तस्येहग्रहणं न स्यात् । अभिप्रग्रहणात्तु तस्यापि ग्रहणम् । आभिमुख्यं फलस्य यदा कर्त्ता बुध्याध्यवस्यति क्रियारम्भे तदा आत्मनेपदमित्ययमर्थोऽभिप्र-

---

तदेव सूत्रे क्रियाफलशब्देन गृह्यते इति भावः । तत्र पाकस्य भोजनं लोकतोऽवगतम् । यागस्य स्वर्गो वेदतः । तदुक्तं भाष्ये । "साधीयो यत्र कर्त्तारं क्रियाफलमभिप्रैति । न चान्तरेणापि यजिं यजिफलं वपिं च वपि फलं लभन्ते । याजकाः पुनरन्तरेणापि यजिं गाश्लभन्ते भृतकाश्च वेतनमिति" । यत्र यस्यां क्रियायां सत्यामित्यर्थः । साधीयः क्रियाफलं

## ¹नैतेषां स्वार्थताविशिष्टेति । (कै)

क्रियामात्रहत्त्विलादिविभावः ॥ एतदुक्तरीत्या भाष्यस्वरसवि-रुद्धम् । अकर्त्रभिप्रेतक्रियाफलाभावस्यैव भाष्यतो लाभात् प्रत्यययोः पौनरुक्त्यं परिहरति ।

## प्रकारमात्रे इति ॥ (कै)

केचित्तु "तथा जातिः" इति बहुव्रीहिः "जात्यन्ताच्छ बन्धुनि" (५।४।९) इति छमाङ्कः ॥ नन्वभिप्रपूर्वकैः तैरिच्छायां रूढत्वेन कथं तदाक्षेपोऽत आह

## कर्त्तारमेति । (कै)

स तु न तत्र विवक्षित इतिभावः ॥

---

१ उपलब्धकैयटे "नैषाम्" इत्यस्ति ॥

---

फले सति लभ्यते । वपत इति । भा । केप्राममु वपत इत्यनेनैवासन्ने फले स्यात् । धान्यं वपत इत्यत्र तु विप्रकृष्टे फले न स्यादित्यर्थः ॥ यं चाभिप्राया-

---

स्वर्गादि । यजिं यागसविधानरूपयज्यर्थम् । एवं वपिमित्यपि । अन्तरेणापि यजिं स साध्ययागव्यापारं विनापि । मतान्तरमाह ।

"क्रियाप्रवृत्तावाख्याता कैश्चित् स्वार्थपरार्थता ।

असती वा सती वापि विवक्षितनिबन्धना" ॥

सर्व इमे स्वभूत्यर्थं प्रवर्त्तन्ते न हि कश्चित् परोऽनुग्रहीतव्य इति प्रवर्त्तत इति भाष्योक्तेः । सर्वस्य स्वार्थे प्रवृत्त्या स्वार्थता सर्वत्र मुख्या । परार्थतात्वसत्येव । "सती वा" इति तु लौकिको वाचो युक्तिः । विवक्षित

(स्वरितञितः कर्त्रभिप्राये क्रियाफले ।
१ । ३ । ७२ ।)

केचिदिति । (कै)

"संप्रत्येति" भाष्यस्वरसादिति तेषां भावः ॥ यद्यप्यण् विधौ कालसम्बन्धो नास्ति तथापि कालोदासीनाः प्रत्यया आक्षिप्यम कालत्रयसाधारणा इत्यभिप्रायेण

कालसामान्ये (कै)

इत्युक्तम्

तस्मादिति ॥ (कै)

सम्प्रतीति (भा)

क्रियाफलविशेषणम् । "सम्प्रती"त्यस्य क्रियाऽव्यवहितोत्तर-कालिकमित्यर्थः । तच्च दृष्टमेवेतिभावः ॥ तद्ध्वनयन् वक्ष्यति

इह न स्याद् यजत (भा)

इत्यादि ॥

---

दिति । भा । यजेह इत्यादौ । एतत्तु कालानिर्देशप्रसङ्गेनोक्तं न तु अत्राप्राप्ति-निमित्तमस्ति ॥ पादिकमहरिति । भा । पादौ भृतिरस्य इत्यर्थे "असमासे निष्कादिभ्य" (५।१।२०) इति ठक् ॥ न चान्तरेणेति । भा । न हि स्वर्गादि

---

विवक्षा सा निबन्धन हेतुरस्याः परार्थताया इत्यर्थः । एवं चासत् परार्थता-विवक्षाया मा भूदात्मनेपदमिति कर्त्रभिप्रायइत्यनेन क्रियाफलं विशेषितम् । सूत्रार्थस्त्वेतत्पक्षे क्रियाफलके यत्र कर्त्रभिप्रेतोद्देश्यके आत्मनेपदमित्यर्थः । अत्र "केचिद्" इत्यनेनारुचिर्बोधिता । तद्बीजं तु यजन्ते ऋत्विज इत्या-देरप्याप्तिः । य स्वर्गादिफलार्थं निर्देशेनेतर व्यापारयति स्वयं च प्रति-

**अभिप्रग्रहणात्त्विति ।** (कै)

तदभावेऽवश्यभावित्वं सन्निहितत्वमेव च प्राधान्यं गृह्यते । सति तु तस्मिन् क्रियोद्देश्यत्वलक्षणप्राधान्यविशेषलाभ इति भाव ॥ क्रियाप्रारम्भे यदा कर्त्ता फलस्याभिमुख्यमुद्देश्यत्वं बुद्ध्या जानाति तदात्मनेपदमित्यन्वयः । एवं च तादृशोद्देश्यमेव फलशब्देन लभ्यत इति तात्पर्य्यम् ॥ इदमेवाभिप्रेत्य वक्ष्यति

**अभिराभिमुख्ये ॥** (कै)

**आदिकर्मणीति ।** (भा)

आद्यत्वं चाभिमुख्यत्वं च कर्मप्रारम्भकालिकमेवेति दिक् ॥ ननु वपनस्य केशकर्त्तनरूप फलमव्यवहित मेवेति कथमिहाप्राप्तिरत आह

**केशेति ॥** (कै)

---

किञ्च क्रियाप्रवृत्ते सर्वत्र स्वार्थोद्देश्यकत्वेन तत्र परार्थोद्देश्यकत्वेन तत्र परार्थोद्देश्यकत्वविवक्षाऽत्यन्तमनुचितैवेति दिक् । केचित्तु प्रतिविधानार्था-दपि तदर्थद्योतकमात्मनेपदं णिचा सह विकल्पते । सविधानमात्र णिजर्थं । सर्वे इमे स्वभूत्यर्थं प्रवर्त्तत इति न्यायेन स्वार्थं प्रवर्त्तमानस्य प्रयोज्यस्यानुकूल्य-कर्त्ता सविधातोच्यते । प्रैषस्तु न णिजर्थ । एवं चैकविषयत्वात् तयो पर्य्याय । यजते याजयतीति वदन्ति । तन्मतमाह

"केषां चित् कर्त्रभिप्राये णिचा सह विकल्पते
आत्मनेपदमन्येषा तदर्था प्रकृतिर्यथा"

णिचा सह णिजर्था प्रकृतिर्धातुर्यथा विकल्पते तद्वत् । अन्येषां स्वरित-ञिद्व्यतिरिक्तधातूनाम् । "हेतुमति च" (३।१।२६) इत्यस्यापि संविधान-

धान्यं वपत इति । (कै)

बीजविकरणार्थोऽत्र वपतिरिति भावः ॥ भाष्ये

यं च (भा)

इत्यादि । अत्र "अभिप्रैति" सम्बन्धमात्रे । एवं च येन फलेन सम्प्रति कर्ता सम्बद्धः येन च सम्बद्धो भविष्यति येन च सम्बद्धोऽभूत् सर्वेणात्मनेपदं सिद्धम् । कर्मारम्भे तस्यैव स्वसम्बन्धितयोद्देशात् । तत्र भूते उपयोगोऽस्याविष्टदेवदत्त इत्यादौ ॥ भाष्ये

[1]अत्रापि हीति । (भा)

न च तानि फलानि न क्रियारम्भोद्देश्यानि इति वाच्यम् ।

---

१ अत्र "हि" इति नास्ति बहुपूर्वमुद्रितभाष्यपुस्तकेषु ।

---

रूपे व्यापारे वर्तमानाद्धातोर्लिङित्यर्थः । फलेऽत्र संविधानमेवार्थः । तादर्थ्य-तोर्थ्यादावपि स्वरितेत्त्वमनन्यम् । वस्तुतो लिप् पिरप्रावापो । "तत्पदोऽन्यतो हेतुश्च" (१ । ३ । ५५) इति सूत्रात् । अत एव तदाद्यस्य कर्तरम् । अत एव पाचयति देवदत्तो यज्ञदत्तेन इत्यादि प्रयोगः "गतिबुद्धि" (१ । ४ । ५२) इति सूत्रं च परिहार्यम् । एवं च भिन्नविषयत्वात् विकल्पोऽहितमुक्ता । किं च सामान्यविहितस्य लिपो धातुविशेषविहितेनात्मनेपदेन बाध स्वोचित । एतच्च केषो चिरितमेन सुखिनमिति हेमाराम । अत एतेषां द्विभात्मनेपदयोर्विकल्पश्रमकीर्ण दर्शयति

ऋत्विग्व्यापारवचनयजेरारम्भो होता भविष्यामीत्यादिप्रतिवचनं तदुद्देश्यास्य गाव एवेति भावः ॥

पादो भृतिरस्येति । (कै)

पादभृतिसम्बन्धिदिनमित्यर्थः । दिवसस्य तां भृतिं लब्धामर्ह इति तात्पर्यम् ॥ भाष्ये

सर्वच चेति । (भा)

न हि प्रयोजनमनुद्दिश्येतिन्यायादिति भावः ॥

प्रकर्षेति । (भा)

अनन्यलभ्यत्वं प्रकर्षः ॥

---

आत्मानं क्रीणीष्व इति विनता कद्रूराह । तस्य च दास्यादात्मनो मोचनाय पुत्रसंविधानं कुरु इत्यर्थ इति तेषां तद्भ्रमबीजम् । तत्र प्रत्युपकारं विना दास्यानुमुक्त्यसम्भवात् प्रत्युपकारस्य च स्वासाध्यत्वादर्थ-सामर्थ्यात् पुत्रसंविधानं गम्यते । न तु स तदर्थ इति स तेषां भ्रमः । एवं केशश्मश्रु वपते इत्यत्र वपनकर्तुं संविधानं कुरुते इत्यर्थ इति तेषां भ्रम-बीजम् । तत्रापि स्वस्यासामर्थ्येन सामर्थ्यात्तद् गम्यते इति तेषां भ्रम स । एवमन्यत्रापि ऊह्यमिति हेलाराज । अथ सिद्धान्ते प्रवृत्ते

"यत्रोभौ स्वामिदासौ तु प्रारभेते सह क्रियाम्
युगपद्धर्मभेदेन धातुस्तत्र न वर्तते" ॥

स्वामिसाध्य सम्भारघटनरूपं संविधानम् । दाससाध्यं तु विक्लित्ति-पर्यन्तं साधनविनियोगरूपम् । तत्र भिन्नत्वाद् व्यापारस्य युगपदेकधातु-

## साधीयः (भा)

इत्यस्य क्रियाफलेनान्वयः । अनन्यलभ्यं क्रियाफलं यत्र संविधानरूपे धात्वर्थे सति कर्त्तारमभिप्रैति तत्र तङानौ इत्यर्थ इति भावः ॥ किं तत् साधीयः क्रियाफलं तत्राह

## न चान्तरेणेति । (भा)

यद्धन्यादिफलमन्तरेण यजिक्रियां न च नैव लभन्ते तदित्यर्थः ॥ गवादिषु च तद्व्यतिरेकं दर्शयति

## याजकाः पुनर् (भा)

इत्यादिना ॥ तद्व्याचष्टे

---

वाच्यत्वासम्भवेन किं संविधानापेक्षमात्मनेपदं किं वा संस्कारकापेक्षम् परस्मैपदमिति संशयः । अनेकार्थत्वाद्धातूनां युगपदर्थद्वयाभिधानेऽप्येकत्र-प्रयोगे विरुद्धत्वादेशद्वयानुपपत्त्या स एव संशय इति हेलाराजः । न च क्रियागतविशेषमविवक्षितं कृत्वा क्रियामात्रे साध्यसाधनभावमात्रविव-क्षायामत्र परस्मैपदं युक्तमिति वाच्यम् । तया क्रियया स्वामिनो भोजनस्य लाभेन दासस्य श्रममात्रलाभेन पूर्वपक्षस्यैव सिद्धेः । किं चैवं रीत्या यजति यजमान इत्यस्याप्यापत्तिः । न चेष्टापत्तिः । तदा कर्तृगामिनोऽकर्तृगामिनश्च फलस्याभावेन "स्वरितञित उभयवन्त" इति भाष्यस्यासङ्गतेः। अत्र स्वामि-पदार्थसामर्थ्यात् तद्गतं संविधानमवगतं दास पदार्थसामर्थ्याच्च तत् क्रियायाः परार्थत्वमनवगतमिति नाचाख्यातस्य परस्मैपदमिति केचित् । एवमपि पूर्वपक्षस्यैव सिद्धिरित्यन्ये । समाधत्ते

न हीति । (कै)

यद्यपि दानादिनापि स्वर्गो भवति तथापि स्वर्गविशेषस्य क्रियाविशेषनियतत्वादनन्यलभ्यत्वमिति भाव ॥

तदुद्देशेन । (कै)

विशेषोद्देशेन। एव च क्रियाफलशब्देन तदेव ग्राह्यमिति भाव ॥ कारिकायां यत्सिद्ध्यर्थं पचादय एवारभ्यन्त इत्यन्वय । एवकाराध्याहारश्च बोध्य ॥

---

"सविधातुश्च सान्निध्यात् दासे धर्मोऽनुबध्यते ।
छत्रिणा चापि सम्बन्धात् छत्रिशब्दाभिधेयता" ॥

उत्तरार्धस्य यथेत्यादि । दासधर्मस्य तु न स्वामिन्यारोप । उत्तमे निकृष्टधर्मारोपाप्रतीतेरित्यल विस्तरेण । "अग्नीन् व्यादधीत" इत्यत्र यद्यप्याधानफलमाहवनीयत्वादमिनिष्ठ तथापि यज्ञहोमादिमुखलाभरूप कर्तृगतमप्यस्ति तदादायात्मनेपदम् । आहवनीयत्वादेराधानसंस्कारातिरिक्तत्वे मानाभावेन तस्य च धात्वर्थतया तदतिरिक्तस्यैव मदुक्तस्य तत्फलत्वौचित्यात । स्पष्ट चेद "एक पूर्वपरयो" ( ६ । १ । ८४ ) इति सूत्रे भाष्ये। एतेन कर्त्रभिप्रेतत्व फले कर्त्रर्थत्वमेव न तु कर्तृसमवेतत्वमिति पार्थसारथ्युक्तमपास्तम् ।

# शेषात् कर्त्तरि परस्मैपदम्।
# १। ३। ७८॥

भाष्ये

अर्थे (भा)

कर्मकर्त्तृरूपे॥

प्रतिषेध इति। (भा)

परस्मैपदस्येति शेषः॥ कार्य्यातिदेशे कर्मवच्छास्त्रस्य परत्वेनात्मनेपदं सिध्यत्येव इत्यत आह

शास्त्रेति। (कै)

वस्तुतः कार्य्यातिदेशेऽप्युपदेशदेश एव देशस्तस्य शास्त्रातिदेशानतिरेकश्च इति न दोष इति बोध्यम्॥ नन्वेवमपि विशेषविहितेनातिदेशिकेनोपदेशस्य बाधः स्यादत आह

स्वाश्रयमिति। (कै)

अचारितार्थ्यमेव हि बाधकत्वे बीजम् अतिदेशश्च यगादिसम्पादनेन चरितार्थ इति भावः॥ भाष्ये

शेष इति। (भा)

एव च भावकर्मणोरितिनियमे उपयुक्तत्वान्नाय शेष इति

भावः॥ ननु प्रकृतिनियमेऽनुदात्तङिदादिभ्यो व्यावृत्तं परस्मैपदं शेषेभ्य एवेति किं तेनेत्यत आह

**प्रत्ययनियम इति॥ (कै)**

शेषं दर्शयति

**गन्धनादिष्विति। (कै)**

एवं गन्धनादौ प्राप्तमात्मनेपदं यथा बाधते तथाऽसति कर्तृग्रहणे कर्मकर्त्तर्य्यपि तद्बाधेतेति भावः॥

**सति त्विति। (कै)**

इह करणं तु स्पष्टार्थमिति भावः॥

---

# अनुपराभ्यां कृञः। १। ३। ७९॥

भाष्ये

**प्रतिषिध्यते तत्र परस्मैपदमिति। (भा)**

स्वरितञित आत्मनेपदमिति प्राप्तस्य पुनर्विधानेनार्थादन्यत्र इत्यवगतेरितिभावः॥ अत एव प्रतिषिध्यते इत्युपक्रमे

**कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवतीति (भा)**

उक्तिः संगच्छते। ननु तिबादिसूत्रेण सामान्यतः प्राप्तानां "स्वरि-

तन्त्रितः" (१ । ३ । ७२) इति नियमे तदपवादतया अनेन परस्मैपदविधाने आत्मनेपदमापद्यते कर्त्रभिप्रायादौ अनेन परस्मैपदविधानात् ॥ अन्यत्र "शेषात्" इति नियमेन व्यावर्त्तितत्वादत आह

## अयमभिप्राय इति। (कै)

तदपवादत्वापेक्षया कर्तृगामिक्रियाफलादौ एव"तिप्तस् झि" (३ । ४ । ७८) इत्यस्य प्रतिप्रसवविधौ लाघवादिति भावः ॥

## प्रतिप्रसूयत इति। (कै)

क्रमेण नियम इति पक्षे इयं शङ्का इत्यर्थः ॥

## मौलेन। (कै)

सर्वेषां मूले स्थितेन"तिप्तस् झि" (३ । ४ । ८८) इत्यनेन। "वा क्यषः" (१ । ३ । ९०) इत्यतो"द्युद्भ्यः" (१ । ३ । ९१) इत्यत्र वाग्रहणानुवृत्तिः ॥ नन्वनेन निषेधेन नियमापाकरणेऽपि पुनर्मूलविधेः प्रवृत्त्याशङ्का तदवस्थैवेत्यत आह

## साक्षादिति। (कै)

तन्निषेधे हि शेषत्वात् शेषादिनियमात्तन्नियमप्रसङ्ग इतिभावः ॥

## विधीयत इति। (कै)

न क्रमेण नियमः किन्तु सर्वप्रकरणं युगपदेव नियामकमिति

भावः ॥ अनेन नियमानां विधिमुखेन प्रवृत्तिः सामान्यशास्त्रसंकोचकताचेति ध्वनितम् ॥ भाष्येऽपि

आत्मनेपदेन परस्मैपदं बाध्यते (भा)

इत्यनया विधिमुखप्रवृत्तिः सूचिता । निषेधमुखेन प्रवृत्तौ हि तन्निषेधस्य शाब्दत्वाद्बाध्यते इत्युक्तिरसंगतैव स्यात् ॥

---

## बुधयुधनशजनेङ् प्रुद्रुस्रुभ्यो णेः । १ । ३ । ८६ ॥

उत्तरसूत्रेण सिद्धिमाशङ्क्यपरिहरति भाष्ये

बुधादिष्विति ॥ (भा)

नन्वकर्मकाणां ग्रहणं सकर्मकार्थमिति विरुद्धमत आह

अकर्मका अपीति । (कै)

प्रकारत्रयेण तेषां सकर्मकत्वमितिभावः ॥ नन्वकर्मकाणां सकर्मकतादशायामिव अप्राप्तत्वाविशेषात् अचित्तवत् कर्तृकतायामपि विध्यर्थत्वसम्भवाद् वाकारोऽनुपपन्न इत्यत आह

चार्थे इति ॥ (कै)

अचित्तवत् कर्तृकार्यमिति । (कै)

अचित्तवत्कर्तृकाकर्मकार्यमित्यर्थः ॥

---

# अणावकर्मकाच्चित्तवत्कर्तृकात् । १ । ३ । ८८ ॥



ननु यतो णेरात्मनेपदं ततः प्रागवस्थाऽणिपदग्राह्येति न दोषोऽत आह

णिमात्रेति । (कै)

प्रत्यासत्तिमज्ञानानस्याशङ्का इत्यर्थः ॥

---

१ अणावकर्मकादिति चुरादिणिचो ण्यन्तात् परस्मैपदवचनम् । वा । अणावकर्मकादिति चुरादिणिचो ण्यन्तात् परस्मैपदं वक्तव्यम् । इहापि यथा स्यात् । चेतयमानं प्रयोजयति चेतयतीति । यदि तर्ह्यासामीप्यतेऽणिग्रहणमिदानीं किमर्थं स्यात् । अकर्मकग्रहणण्यन्तविशेषणं यथा विज्ञायेत । अथाक्रियमाणे कस्याकर्मकग्रहणं स्यात् । णेरिति वर्तते (१ । ३ । ८६) ण्यन्तविशेषणम् । तत्र को दोषः । इहैव स्यात् चेतयमानं प्रयोजयति चेतयतीति । इह न स्यात् । आसयति । शाययतीति । सिद्धं तु अतस्मिन्नाविति वचनात् । वा । सिद्धमेतत् । अतस्मिन्नौ योऽकर्मकस्तन्नेति

चुरादिणिचो ण्यन्तादिति । (भा)

सामानाधिकरण्ये वैयधिकरण्ये चान्वयोऽत आह

द्वितीयेति ॥ (कै)

आरोह्यमाणमिति । (कै)

निवृत्तप्रेषणचतुर्थकक्षेयं ततो हेतुमण्णिच् ॥

प्रयोजनान्तरमपीति । (कै)

वस्तुतस्तादृशप्रयोगानभिधानमितिभाष्याशय इत्यन्ये ॥

तस्यैवेति । (कै)

यद्यपि

यस्माण्णेः प्राग् (भा)

इति वक्ष्यमाणरीत्या हेतुमण्णिरिति लभ्यं तथाप्ययं भावः । तथा सति "आधृषाद्वा" इति विकल्पितणिच्यण्यन्तसम्भवेन तत्सुरादिण्यन्तादपि परस्मैपदं यथा स्यादिति उत्तरभाष्यस्य त्वयं भावः । क्वचित्तथाऽण्यन्तसंभवेऽपि चुरादिणिच्त्वावच्छेदेन न सम्भवति । हेतुमण्णिच्त्वावच्छेदेन तु सम्भवत्यण्यन्ततेति स एव गृह्यते इति ॥

---

प्रत्ययम् । सिध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तम्-अण्यावकर्मकादिति चुरादिणिचो ण्यन्तात् परस्मैपदमिति । नैष दोषः । अण्याविति कस्येदं ग्रहणम् । यस्माण्णेः प्राक् कर्म कर्त्ता वा विद्यते न चैतस्माण्णेः प्राक् कर्म कर्त्ता वा विद्यते ।

# न पादम्याङ् यमाङ् यसपरिमुह-रुचिनृतिवदवसः। १।३।८९॥

छन्दसीति। (कै)

"सुपां सुलुको" (७।१।३९) ऽप्युपलक्षणमिदम्॥

---

# [1]लुटि च क्लृपः।१।३।९३॥

भाष्ये

अनुकृष्यते इति। (भा)

"वृद्भ्यः स्यसनोः" (१।१।९२) इत्यनेन तु न सिद्धिः। तत्र चतुर्णामेव ग्रहणादितिभावः॥

---

१ किमर्थश्चकारः। स्यसनोरित्येतदनुकृष्यते (१।३।९२)। यदि तर्हि मान्तरेण चकारमनुवृत्तिर्भवति "द्युद्भ्यो लुङि" (१।३।९१) इत्यत्रापि चकारः कर्तव्यः विभाषा इत्यनुकर्षणार्थः (१।३।९०)। यथेदानीमन्तरेणापि चकारमनुवृत्तिर्भवतीहापि नार्थश्चकारेण। एवं सर्वे चकाराः प्रत्याख्यायन्ते।

भाष्यकार इति । (कै)

न च चकारेण स्पष्टा प्रतिपत्तिः । स्वरितत्वं तु व्याख्यानसापेक्षमिति वाच्यम् । तत्रेऽपि चे समुच्चेतव्यविशेषप्रतिपत्तये तदपेक्षायास्तुल्यत्वादितिभावः ॥

सर्वे चकारा इति । (भा)

अनुवृत्तिफलका इत्यर्थः । तेन "आटश्च" ( ६ । १ । ९० ) इति चस्य पुनर्विधानार्थत्वपरभाष्येणाविरोध ॥

इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते
महाभाष्यप्रदीपोद्द्योते प्रथमस्याध्यायस्य
तृतीये पादे द्वितीयमाह्निकम्
पादश्च समाप्तः ॥

---

# BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL

New Series, No. 1029.



# महाभाष्यप्रदीपोद्योतः ।

# MAHĀBHĀSYAPRADĪPODDYOTA

BY

NAGEÇA BHAṬṬA

EDITED BY

PANḌIT BAHUVALLABHA ÇASTRI

VOL II FASCICULUS VII

CALCUTTA

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET

1903.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

No 57, PARK STREET, CALCUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS MESSRS LUZAC & CO,
46, GREAT RUSSELL STREET, LONDON, W C, AND MR OTTO
HARRASSOWITZ, BOOKSELLER LEIPZIG, GERMANY

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fascicli being out of stock.*

## BIBLIOTHECA INDICA

### *Sanskrit Series*

| | | Rs | |
|---|---|---|---|
| Advaita Brahma Siddhi (Text) Fasc 1 4 @ /6/ each | | 1 | 8 |
| Advaitachinta Kaustubha Fasc 1 | | 0 | 6 |
| *Agni Purana (Text) Fasc 4-14 @ /6/ each | | 4 | 2 |
| Aitareya Brahmana Vol I Fasc 1 5 and Vol II Fasc 1 5 Vol III Fasc 1 5 Vol IV Fasc 1 5 @ /6 | | 7 | 8 |
| Anu Bhasyam (Text) Fasc 1 5 @ /6/ each | | 1 | 14 |
| Aphorisms of Sandilya English) Fasc 1 | | 0 | 12 |
| Astasahasrika Prajnaparamita (Text) Fasc 1-6 @ /6/ each | | 2 | 4 |
| Açvavaidyaka (Text Fasc 1 5 @ /6/ each | | 1 | 14 |
| Avadana Kalpalata (Sans and Tibetan) Vol I Fasc 1 5; Vol II Fasc 1 5 @ 1/ each | | 10 | 0 |
| *Bhamati (Text) Fasc 4 8 @ /6/ each | | 1 | 14 |
| Bhatta Dipika Vol I Fasc 1 3 | | 1 | 2 |
| Brhaddevata (Text) Fasc 1 4 @ /6/ each | | 1 | 8 |
| Brhaddharma Purana (Text) Fasc 1 6 @ /6/ each | | 2 | 4 |
| Bodhicaryavatara of Cantideva Fasc 1 | | 0 | 6 |
| Catalogue of Sanskrit Books and MSS Fasc 1-3 @ 2/ each | | 6 | 0 |
| Çatapatha Brahmana Fasc 1-6 | | 2 | 4 |
| Çatasahasrika Prajnaparamita (Text) Fasc 1-4 @ /6/ each | | 1 | 8 |
| *Caturvarga Chintamani (Text) Vols II 1-25; III Part I Fasc 1-18 Part II Fasc 1-10 @ /6/ each | | 19 | 14 |
| Çatasahasrika prajnaparamita Part I Fasc 1 3 @ /6/ | | 1 | 2 |
| Çlokavartika (English) Fasc 1-3 | | 2 | 4 |
| *Çrauta Sutra of Apastamba (Text) Fasc 4-16 @ /6/ each | | 4 | 14 |
| Ditto *Çankhayana (Text) Vol I Fasc 1-7, Vol II, Fasc 1-4 Vol III Fasc 1-4 @ /6 each | | 5 | 10 |
| Çri Bhashyam Text) Fasc 1 3 @ /6/ each | | 1 | 2 |
| Dana Kriya Kaumudi Fasc 1 | | 0 | 6 |
| Gadadhara Paddhati Kalasara Vol I Fasc. 1-4 | | 1 | 8 |
| Kala Madhava (Text) Fasc 1-4 @ /6/ each | | 1 | 8 |
| Kala Viveka Fasc 1-4 | | 1 | 8 |
| Katantra (Text) Fasc 1-6 @ /12/ each | | 4 | 8 |
| Katha Sarit Sagara, (English) Fasc 1-14 @ /12/ each | | 10 | 8 |
| Kurma Purana (Text) Fasc 1-9 @ /6/ each | | 3 | 6 |
| Lalita Vistara (English) Fasc 1-3 @ /12/ each | | 2 | 4 |
| Madana Parijata, (Text) Fasc 1 11 @ /6/ each | | 4 | 2 |
| Maha-bhasya pradipodyota (Text) Fasc 1-9 & Vol II, Fasc. 1-7 @ /6/ each | | 6 | 0 |
| Manutika Sangraha, (Text) Fasc 1 3 @ /6/ each | | 1 | 2 |
| Markandeya Purana, (English) Fasc 1 6 @ /12 each | | 4 | 8 |
| *Mimamsa Darçana (Text) Fasc 7-19 @ /6/ each | | 4 | 14 |
| Narada Smrti (Text Fasc 1-3 @ /6 | | 1 | 2 |
| Nyayavartika, (Text Fasc 1-5 @ /6 | | 1 | 14 |
| ... (Text) Vol III Fasc. 1 6; Vol IV, Fasc 1-8 @ /6/ each | | 5 | 4 |

# महाभाष्यप्रदीपोद्योतः ।

पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ॥

कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ॥



# आ कडारादेका संज्ञा । १ । ४ । १ ॥



नन्वविरुद्धानां संज्ञानां विषये विरोधमूलकविप्रतिषेधशास्त्राऽप्रवृत्तेरस्य वैयर्थ्यमनुपपन्नमत आह

आकडारादिति । (कै)

अविरोधमजानतः शङ्केति भावः ॥ निरवकाशस्थले तु अविरोधं जानतोऽपि शङ्केत्याह

विप्रेपेति । (कै)

नतु विरोधादपीत्येवकारार्थः ॥

---

आ कडारादेका संज्ञा । १ । ४ । १ ॥

किमर्थमिदमुच्यते । अन्यत्र संज्ञासमावेशान्नियमार्थं वचनम् । वा । अन्यत्र संज्ञासमावेशो भवति । क्वान्यत्र । लोके व्याकरणे च । लोके तावत् । इन्द्रः शक्रः पुरुहूतः पुरन्दरः । कन्दुः कोष्ठः कुशूल इति । एकस्य

उदाहरणेति। (कै)

फलभेदेऽपि यदि समावेशः किमु वक्तव्यं तद्भेद इति दृष्टान्ततेति भावः॥ ननु इन्द्रादीनामैश्वर्यशक्तिमत्त्ववज्रधाखानपूर्दारणानि प्रवृत्तिनिमित्तानीति। कथमेते संज्ञाशब्दाः शब्दप्रवृत्तिनिमित्तको हि स इति चेन्न। सत्यपि योगे रूढिमात्रेण संज्ञाशब्दत्वमिति भगवतोऽभिप्रायात्॥

कर्मणि विधानमिति। (कै)

एवं च फलभेदादविरोधान्न वाध इति कैयटाशयः। ननूभयथा पाठनिर्णये कथं संदेहोऽत आह।

गुणदोषेति। (कै)

किं सम्भवमात्रेण [1]द्विधापाठोऽयाखरषादिति विवेक्तुं तद्विचारः कार्य्य इति भावः॥

यत्नः। (कै)

ज्ञापकाश्रयणचकारादिरूपः॥ यद्यपि परं कार्य्यमिति [2]पाठेऽपि सूत्राणामन्यथा पाठः कार्य्यस्तथापि तत्र न वर्णगौरवं नापि प्रतिपत्तिगौरवमिति न स दोष इति भावः॥

---

१ द्विधापाठोऽर्थाखरसाद्। क।
२ "पाठे" इत्यारभ्य "स दोष." इत्यन्तं नास्ति। ङ।

---

यथेमिदमुच्यते। व्याप्तिप्रदर्शनमेतत्। किं तर्हीति। कथं त्वेतत् सूत्रं पठितव्यम्। किमा कडारादेका संज्ञेति। आहोस्वित् प्राक् कडारात् परं कार्य्यमिति। कुतः पुनरयं सन्देहः। उभयथाह्याचार्य्येण शिष्याः सूत्रं

## कार्य्यशब्देनेति । (कै)

संज्ञा इत्येव तु नोक्तम् उत्तरत्रानन्वयात् । यद्यप्यन्यान्यपि कार्य्याण्यत्र सन्ति वचनपुरुषनियमपूर्वनिपातादयः तथापि तेषां केनापि बाधप्रसङ्गाभावादबाधितप्रवृत्तेर्न चैतत् सूत्रसत्त्वात्तल्लाभ इति भावः ॥

## पूर्वया । (कै)

अनवकाशया ॥

## न नियमार्थमिति । (कै)

आद्ये पाठे तु एकैव संज्ञा न द्वितीयेति नियमे विध्यर्थत्वासम्भवात् ॥ अत्रच विध्यर्थत्वसम्भवेन नियमो न युक्त इति भावः ॥ ननु पर्य्यायेण प्रवृत्त्या पूर्वस्यापि चारितार्थ्यसंभवेन संज्ञानां विरोधाभावेन च उभयोः प्रसक्तौ अत्रापि पाठे नियम एव स्यादत आह

## एतदेव चेति । (कै)

नियमेऽनुवाददोषापत्त्या वरं बाधकत्वकल्पनाद्वारा विधित्वमिति भावः ॥

---

प्रतिपादिता । केचिदा कडारादेका संज्ञेति । केचित् प्राक् कडारात् परं कार्य्यमिति । कस्मान्न विशेष । तत्रैकसंज्ञाधिकारे तद्वचनम् । वा । तत्रैकसंज्ञाधिकारे तद्ग्रहणम् । किम् । एका संज्ञाभवतीति ॥ ननु च यस्यापि परं कार्य्यं तेनापि परग्रहणं कर्त्तव्यम् । परार्थं मम भविष्यति । विप्रतिषेधे चेति (१ । ४ । २) । ममापि तर्ह्येकग्रहणं परार्थं भविष्यति । सङ्ख्यायामेकशेष एकविभक्तौ (१ । २ । ६४) इति । संज्ञाधिकारस्थायम् ।

विप्रतिषेधे (कै)

इत्यस्य दृष्टबाधयेति शेषः॥ भाष्ये

परार्थमिति। (भा)

अनच(अपि। का) अकरणार्थमित्यर्थः। परार्थं यत्त्वया कृतं तदेव ममाच कृतं भविष्यतीत्यर्थः॥ ननु विशेष्यवाचिपदासन्निधाने नपुंसकमेव प्रयोक्तुमुचितं संज्ञापर्य्यायनामादिशब्दानामपि विशेष्यत्वसंभवाद्यात आह

संज्ञेति। (कै)

प्रचुरप्रसिद्धेः (सिद्धे। ८) संज्ञाशब्द एव प्रकरणादुपतिष्ठते इत्यर्थः॥ ननु "सरूपाणाम्" (१। २। ६४) इत्यस्यातिक्रान्तत्वात् कथं तदर्थताशेत्यत आह

असाचेति। (कै)

एकसंज्ञाधिकारोत्तरमित्यर्थः॥

लिङ्गविपरिणामेनेति। (कै)

भावसाधने शेषशब्दे विभक्तिविपरिणामेनेत्यपि बोध्यम्। बह्वयोगव्यवधानात् यत्त्वया परार्थं कृतं तदेव ममाच बुद्धिस्थं भवि-

---

तत्र किमन्यच्छक्यं विज्ञातुमन्यदतः संज्ञायाः। तत्रैतावद्वाच्यम्। आ कडारादेका। किम्। एकासंज्ञा भवतीति॥ अङ्गसंज्ञया भपदसंज्ञयोरसमावेशः। वा। अङ्गसंज्ञया भपदसंज्ञयोः (१। ४। १३-१४-१८) समावेशो न प्राप्नोति। सार्पिष्कः। बार्हिष्कः। याजुष्कः। धानुष्कः। (४। ४। ५१। (५। १। ६३)७। ३। ५१। ८। ३। ३९। ७। २। ११८)

ष्यति इत्यर्थकतया तत्रत्यमत्रानुवर्त्तते इत्येव भाष्येण (भाष्यं न। का) व्याख्यातम् ॥ नन्वेवमपि संज्ञेत्यधिककार्य्यमेवेत्यत आह

संज्ञाधिकारश्चेति ॥ (भा)

किम् (भा)

इतिप्रश्नः । "एका संज्ञा" इत्याद्युत्तरम् । प्रश्ने सामान्ये नपुंसकम् । सर्पिः शब्दादार्हीयठक् तदस्य पण्यमिति (वा। इ) इसन्तत्वात् कः । तत्राङ्गसंज्ञाभावे किं स्यादत आह

असत्यामिति ॥ (कै)

अनङ्गस्यापीति । (कै)

यद्यपीष्टानुरोधात् समावेशोऽपि ज्ञापयितुं शक्यस्तथापि लघ्वैकशरणानामिष्टानिष्टे दुर्ज्ञेये इति भावः ॥

देवदत्तो गार्ग्य इति । (कै)

वाक्यसंस्कारपक्षे इदम् । प्रत्ययग्रहणपरिभाषया वृद्धिवारणं शक्यमिति चिन्त्यम् । कुमुदान् इति ड्मतुप् । सिद्धान्तस्त्वित एव ज्ञापकात् समावेश इति "परं कार्य्यत्वम्" इत्यत्र सुबन्तसमुदायात् कथं तद्धितस्तदुत्पत्तावपि कथं पूर्वपदे विभक्तिश्रवणमत आह

---

शाभ्यः । माणवत्र्य इति (४ । १ । १०६ । (१०५) ६ । ४ । १४६ ॥ ७ । २ । ११७) । अनवकाशे भपदसंज्ञे अङ्गसंज्ञां बाधेयाताम् । परवचने हि नियमानुपपत्तेरुभयसंज्ञाभावः । यस्य पुन: परं कार्य्यत्वं नियमानुपपत्तेस्तस्योभयोः संज्ञयोर्भावः सिद्ध: । कथम् । पूर्वं तस्य भपदसंज्ञे पराङ्गसंज्ञा । कथम् । एवं स वक्ष्यति । यस्मात्प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गम् पदम् ।

अकर्मकत्वादिति । (कै)

एवमर्थमर्थं प्रति शब्दनिवेश इत्यादौ निविशत्यधिकरणे द्वितीयार्थमपीदं बोध्यम् ॥ सकर्मकयोगेऽपि कर्मत्वाविवक्षायां सम्बन्धत्वेन विवक्षायां प्रत्यादीत्यसम्बन्धेनान्वयविवक्षायां च द्वितीयार्थमित्यपि बोध्यम् । एतेनाकर्मकत्वाद् द्वितीया नास्तीति कैयटोक्तेः सकर्मकधातुयोगे कर्मणि द्वितीयैव सिद्धमिति भ्राम्यन्तः परास्ताः ॥

---

स्यात् । कर्मप्रवचनीययुक्ते द्वितीयेति । वृक्षं प्रति विद्योतते वृक्षमनु विद्योतते इति ॥

---

नोपयुज्यत इति प्रश्नः । वृक्षं प्रतीति । भा । अकर्मकत्वाद्द्युते कर्मणि द्वितीया नास्ति ॥

---

पादयो ऽव्ययार्थाः । नैव प्रत्यादीनामर्थाः । किन्तर्हि सञ्ज्ञाया प्रत्यादीना विषयत्वेन निर्दिष्टा इत्याहेति । द्वितीया तु कर्मणि । कर्मप्रवचनीयसंज्ञा तूपसर्गत्वनिवृत्त्यर्था । तेनोपसर्गात्सुनोतीति षत्वं न । परिशब्दयोगे पञ्चमी तु न भवति । "पञ्चम्यपाङ्"त्यत्र वर्जनार्थेनापेत्यनेन साहचर्यात् ॥

---

'वृक्षंवृक्षमिति' । वीप्सा द्विर्वचनेन द्योत्यते परिशब्दस्तु क्रिययैव सम्बध्यते द्वितीया चेह कर्मणि, कर्मप्रवचनीयसञ्ज्ञा तूपसर्गसञ्ज्ञानिवृत्त्यर्था तेनोपसर्गात्सुनोतीति षत्व न भवति । 'अपशब्दसाहचर्यादिति' । परिशब्दोऽयन्दृष्टाप्यचारो वर्जने थावर्जने च कर्मप्रवचनीय, अपशब्दस्तु वर्जने एव, कर्मप्रवचनीयाधिकारे पञ्चमी विधीयते तत्र साहचर्य व्यवस्थाहेतु ॥

# अधिपरी अनर्थकौ । १ । ४ । ९३ ॥

ननु गत्यादिसंज्ञाबाधनं फलमित्यत आह

अनर्थकयोरिति ॥ (कै)

पञ्चमीति । (कै)

"पञ्चम्यपाङ्परिभिरिति" ( २ । ३ । १० ) सूत्रेणेति शेषः ॥ किञ्चाधिशब्दयोगे पञ्चम्यविधानेऽपि यथा ऽपादानलात्मा तथा परियोगेऽपीत्याह

---

अधिपरी अनर्थकौ । १ । ४ । ९३ । किमर्थमधिपर्योरनर्थकयो कर्मप्रवचनीयसंज्ञोच्यते । कर्मप्रवचनीयसंज्ञा यथा स्यात् गत्युपसर्गसञ्ज्ञे मा भूतामिति । नैतदस्ति प्रयोजनम् । यत्क्रियायुक्तौ तं प्रति गत्युपसर्गसं

---

अधिपरी अनर्थकौ । १ । ४ । ९३ ॥ किमर्थमिति । भा । अनर्थकयोः क्रियायोगाभावात्सञ्ज्ञान्तरबाधनार्थं सञ्ज्ञाविधानं नोपयुज्यते । नापि परियोगे पञ्चमीविधानार्थम् । अपेन साहचर्याद्वर्जनविषयपरियोगे तस्या

---

अधिपरी अनर्थकौ । १ । ४ । ९३ ॥ उक्तसंज्ञौ स्त । कुतो ऽध्यागच्छति । इहाधिकार्थविरहादनर्थकत्वमधिपर्यो, धात्वर्थमात्रानुवर्तित्वात्

---

अधिपरी अनर्थकौ । १ । ४ । ९३ ॥ ननु चानर्थकयो क्रियायोगाभावाद् गत्युपसर्गसंज्ञयो प्राप्त्यभावान्न तद्बोधनार्थं कर्मप्रवचनीयसंज्ञाविधानमुपपद्यते, नापि परिशब्दयोगे पञ्चमीविधानार्थं तद्विधौ वर्जनार्थस्य

## अपादानेति । (कै)

आगमनादिक्रियानिरूपितेत्यर्थः । द्वितीयार्थमपि वाच्याभावेन कर्मप्रवचनीययुक्तत्वस्य निरूपयितुमशक्यत्वादिति भावः ॥

## पूर्वापरितोपेणेति । (कै)

"नेमावनर्थकाविति" भाष्येण स्फुटं तदा वेदनादिति भावः । किं द्योत्यार्थे जायितेऽपि न चारितार्थ्यं क्रियागतविशेषद्योतकत्वरूपक्रियायोगाभावेन गतिसंज्ञाद्यप्राप्तेरिति बोध्यम् ॥

## प्रयोगानुपपत्तिरिति ॥ (कै)

तस्माद् द्योत्यार्थेनार्थवत्त्वमभ्युपेयितव्यमित्यर्थः ॥ नन्वेवमनर्थकावित्ययुक्तमत आह

---

कौ भवतः । अनर्थकौ चेमौ । इदं तर्हि प्रयोजनं पञ्चमी यथा स्यात् । "पञ्चम्यपाङ्परिभिरिति" । कुतः पर्यागम्यत इति । सिद्धं तु पञ्चम्यपादान इत्येव । सा तर्ह्यपादानपञ्चम्येव । अत्राधिशब्देन योगे पञ्चमी न

---

विधानात् । अपादानसद्भावे चाधिशब्दस्य प्रयोग इव परियोगे तन्निमित्तायाः पञ्चम्याः सिद्धत्वादिति प्रश्नः । अथवेति । भा । पूर्वापरितोपेणेदमुच्यते । यस्य शब्दस्य वाच्यं द्योत्यं वा वस्तु न संभवति तस्य वाक्यार्थे

---

प्राप्त गतिसञ्ज्ञा । तद्बाध संज्ञापकम् । तेन "गतिर्गताविति" निघातो न भवति ।

---

यद्यपाद् अपादानत्वाच्च सिद्धा पञ्चमी यथा ऽधिशब्दस्य प्रयोगे, कुतोऽध्यागच्छतीति, अत एव द्वितीयाविधानार्थमपि नोपपद्यते तस्मादनर्थकयो

तस्मादिति ॥ (कै)

अर्थान्तरबोधकत्वाभावान्निष्प्रयोजनावित्यर्थः ॥ ननु धातुना क्रियोक्तावपि तद्गतोपरिभावसर्वतोभावरूपविशेषद्योतनमनयोः फलमत आह

प्रकरणेति ॥ (कै)

पूर्वं क्रियाप्रक्रमेण तदिति नपुंसकमनुपपन्नमत आह

तदिति । (कै)

एवं च क्रियायोगसत्त्वात्प्राप्तगत्यादिसंज्ञाबाधनार्थमिदमावश्यकमिति भावः ॥ ननु विपरीतं कुतो न शङ्कितमत आह

---

विधीयते तत्रापि च श्रूयते कुतो ऽध्यागम्यते इति । एवं तर्हि सिद्धे सति यदनर्थकयोरुपसर्गसंज्ञा बाधिका कर्मप्रवचनीयसंज्ञां शास्ति तज्ज्ञापयत्याचार्यः अनर्थकानामप्येषा भवत्यर्थवत्कृतमिति । किमेतस्य

---

ऽनुपयोगात् प्रयोगानुपपत्तिः । तस्मादर्थशब्द इह प्रयोजनवाची तेन योऽर्थो ऽनयोर्द्योत्यस्तस्य प्रकरणादिवशात्संप्रत्ययान्निष्प्रयोजनावेतावुच्येते । धातुनोक्तत्वादिति । भा । प्रकरणादिसामर्थ्यावगतविशेषां धातुनोक्तां क्रियामित्यर्थः । आहतुरिति । भा । द्योतयत इत्यर्थः । तदविशिष्टमिति । भा । तत् क्रियालक्षणं वस्त्वविशिष्टम् । अधिपरिसन्निधानेऽप्यनाहितविशेषमित्यर्थः । यथेति । भा । शङ्के न्यस्तं क्षीरं शौक्ल्येनाभिन्नं शङ्खादित्यर्थः । यद्येव-

---

संज्ञाविधानमनर्थकमित्यत आह । 'अनर्थान्तरवाचिनाविति' । यथा तिष्ठति वितिष्ठति परिभवतीत्यादौ धातुमात्रादर्थादर्थान्तरवाचित्वं नैवमत्रार्थान्तरवाचित्वं किन्त्वागच्छतीतिप्रयोगे योऽर्थः स एवाधिपरियोगे

धातोरिति ॥ (कै)

धातोः प्रयोगं व्यर्थत्वेन नाक्षिपतीत्यर्थस्तदेवाह

तेन विनेति । (कै)

तयोर्वाचकत्वाभावादित्यर्थः ॥ नन्वनयोरुपसर्गत्वाभावादुपसर्गेत्यनुपपन्नमत आह

उपसर्गेति । (कै)

आगच्छत्यध्यागच्छतीत्यादि पाठः । अत्रेदं बोध्यम् । कैयटोक्त-ध्यावपावकदृष्टान्तेन भार्योर्मेनापूपौ द्वाविति दृष्टान्तेन वा ऽऽगच्छतीत्यर्थापेक्षया ऽधिकोऽर्थो नानयोर्द्योत्यो नापि प्रकरणादिनाध्या-गच्छतीत्यस्योपरिभावमर्वतो भावार्थकत्वं किं त्वागमनमात्रार्थकत्व-

ज्ञापने प्रयोजनम् । निपातस्यानर्थकस्य प्रातिपदिकत्वं चोदितं तन्न वक्तव्यं भवति । अथ वा नेमावनर्थकौ । किं तर्ह्यनर्थकावित्युच्यते अनर्थान्तरवाचिनावनर्थकौ धातुनोक्तां क्रियामाहतुः । तदविशिष्टं भवति ।

मिति । भा । धातोर्वाचकत्वात्तस्य प्रयोगं नाक्षिपति तेन विना तयोः प्रयोगासंभवादुपसर्गग्रहणं चाधिपर्योरुपलक्षणार्थम् । उक्तार्थानामपीति । भा । प्रकरणादिवशादवगतार्थानामपि स्फुटतरावगत्यर्थः प्रयोगो लोके भवति । न चानियमप्रसङ्गः । येषामेव हि गतार्थानां प्रयोगो दृश्यते तएव प्रयुज्यन्ते न तु वृक्षस्तरुः पादप इति तथा प्रयोगादर्शनात् । अपूपौ

ताभ्यामुच्यते तदत्र विषये धातोरधिपर्योश्च सहाभिधायित्वं, यथा गजशब्दे योऽर्थः स एव मतङ्गज इति सर्वैः सहाभिधीयते, एवं वृषशब्दे योऽर्थः स एव वृषभशब्दे, तदेवमनर्थान्तरवाचित्वादनर्थकत्वात्वादनर्थकावित्युक्तं न त्वभा-

मेवाध्यागच्छतीत्याद्यध्यागमनमाचार्यकमेव किं तु बोद्धुस्ततो मिलि-तादिवार्थबोधने तस्याप्यनुवादकत्वेन धात्वर्थद्योतकतेति व्यवहारः फलं तु न किं चिदिति तत्त्वम्। एतेन प्रकरणादिसामर्थ्यावगत-विशेषमित्यादिकैयटश्चिन्त्यः सर्वत्र प्रकरणसत्त्वे तद्विषये एव वैतत्प्रयोगे मानाभावाच्च॥

अपूपौ द्वाविति। (भा)

अत्र द्विशब्दापूपशब्दयोर्वाचकयोः प्रत्ययर्योर्वाचकद्योतकयोर्द्वा-वित्यत्र तयोर्वाचकानुवादकयोश्च समुच्चयो दृश्यत इत्यर्थः॥

---

यथा शब्दे पय.। यद्येवं धातुनोक्तत्वात्तस्यार्थस्योपसर्गप्रयोगो न प्राप्नोति उक्तार्थानामप्रयोग इति। उक्तार्थानामपि प्रयोगो दृश्यते। तद्यथा। अपूपौ द्वावानय ब्राह्मणौ द्वावानयेति॥

---

द्वाविति अपूपावित्यत एवावगते द्वित्वे द्विशब्दस्यापि प्रयोगो लोके दृश्यते। एतदुक्तं भवति। यथा यावच्छब्दो वाक्यान्तरविषयोऽन्य एव। अन्यश्च यावकशब्दः। यथा च ऋषभशब्दो वृषभशब्द इति च। तथैवागच्छत्यध्या-गच्छति पर्यागच्छतीति च। तदत्र विषये धातोः अधिपर्योश्च सहाभि-धायित्वमङ्गीकर्तव्यम्॥

---

वात्. तयोश्च गतिसंज्ञाबाधाय कर्मप्रवचनीयसंज्ञा विधेयेति दर्शितं भवति। 'कुतोऽध्यागच्छतीति'। किंशब्दादपादाने पञ्चीयत्वेऽर्थिति तसि', तत्र तमेर्थेति तसिलादेशः, 'गतिर्गता' विति निघाताभाव॥

# अपिः पदार्थसम्भावनान्ववसर्गगर्हा-समुच्चयेषु । १ । ४ । ९६ ॥

ननूपसर्गत्वप्रयुक्तषत्वस्य "स्यादि" त्यत्र निवृत्तये एतत्संज्ञाप्रवृत्तिर-स्त्वेवेत्यत आह

यथेति ॥ (कै)

इत्याहेति । (कै)

इत्याशयेनाहेत्यर्थः ॥

यद्यपीति । (कै)

यदि अपिशब्दार्था इति च्छेदः ॥

---

अपि पदार्थसभावनान्ववसर्गगर्हासमुचयेषु । १ । ४ । ९६ ॥ इह कस्मान्न भवति । सर्पिषोऽपि स्यात् । गोमूत्रस्यापि

---

अपि पदार्थसम्भावनान्ववसर्गगर्हासमुचयेषु । १ । ४ । ९६ ॥ कस्मान्न इहेति । यथा ऽपिशब्दस्य कर्मप्रवचनीयसञ्ज्ञाया सत्या स्यादित्यत्रो-पसर्गाश्रय षत्व न भवत्येव सर्पि शब्दाद्द्वितीया भवतीति प्रश्न । इतरो

---

अपि पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु १ । ४ । ९६ ॥ एषु द्योत्येष्वपिशब्दस्सञ्ज । सर्पिषोऽपि स्यात् । प्रार्थनाया लिङ । तस्या एव

---

अपि पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु । १ । ४ । ९६ ॥ 'पदा न्तरस्येत्यादि' । स्वार्थस्तावदव्यभिचारान्न गृह्यत इति पदान्तरस्यार्थे पदार्थ, तत्रापि पदान्तरप्रयोगे सत्यपि प्रयुज्यमानशब्दार्थे कश्चिद्विशेषमाधत्ते यथा

## स्वपदार्थेति । (कै)

स्वपदार्थेन पदस्याव्यभिचारादित्यर्थः ॥

## सम्भवनादीनां चेति । (कै)

तेषामप्यपिरूपस्वपदार्थत्वादिति भावः । एषु वर्त्तमानो ऽपिरिति नार्थस्तथामति प्रत्यासत्त्या पदार्थशब्देनापेः स्वपदार्थ एव ग्रहणेति तद्वैयर्थ्यम् । अपिः कर्मप्रवचनीय इत्येव वदेदिति तात्पर्यम् ॥

## यदा सामर्थ्यादिति । (कै)

अपिशब्दसामर्थ्यादित्यर्थः । अयं भावः । कर्मप्रवचनीययुक्तत्वं तद्द्योत्यसम्बन्धप्रतियोगित्वमिव तद्द्योत्यबोधकत्वमपि तच्च स्यादित्यस्यैव न सर्पिष इति न ततो द्वितीया । कर्मप्रवचनीयानां संबन्ध-

---

स्यात् । किं च स्यात् । द्वितीया प्रसज्येत कर्मप्रवचनीययुक्ते द्वितीयेति ।

---

भवत्येवाचापि' संज्ञीत्याह । किं च स्यादिति । नेमे इति । यद्यपिशब्दार्था इमे निर्दिश्येरन् पदार्थग्रहणमनर्थकं स्यात् । स्वपदार्थाव्यभिचारात् । संभावनादीनां चोपादानमनर्थकं स्यात् तेषामपि पदार्थत्वात् । परपदार्था इति । स्यादित्यादे परस्य पदस्यामी अर्था इत्यर्थः ।

---

विषयभूते भवने कर्तृदौर्लभ्यप्रयुक्तां दौर्लभ्यं द्योतयन्नपिशब्द' स्यादित्यनेन सम्बध्यते । अनुपसर्गत्वान्न च । सर्पिष इति षष्ठी तु चापिशब्दबलेन

---

नीलशब्द उत्पन्ने न तु तस्मिन्नेवान्यूनानतिरिक्ते वर्तते तथा सति पर्यायत्वप्रसङ्गेनाप्रयोगार्हत्वात्, अत' पदान्तरस्याप्रयोग एव तदर्थे प्रवृत्तो भवतीति भाव' । 'सर्पिषोऽपि स्यादिति' । प्रार्थनायां लिङ्, तस्या एव दुर्लभविषयत्वमपिशब्दो द्योतयन् स्यादित्यनेन सम्बध्यत इति मतप्रसङ्ग', दुर्लभत्वं च

द्योतकत्व तु प्रायिकमधिपर्यादौ व्यभिचारादिति। स्वादित्याख्यानेन विन्दुत्वेनाश्रयत्वेन वाश्रयोपस्थितिरित्येतत्पचतात्पर्यम् ॥ भाष्ये

अथवेति। (भा)

अय भाव। अपिना परपदार्थो बिन्दुस्तद्दौर्लभ्यप्रयुक्तदौर्लभ्य सम्बन्धश्च द्योत्यते तथापि। द्योत्यसम्बन्धप्रतियोगित्वस्य बिन्दौ सत्त्वात्तस्यैव कर्मप्रवचनीययुक्तत्वमिति तदाह

बिन्दुकर्तृकत्वमिति। (कै)

तद्दौर्लभ्यप्रयुक्तदौर्लभ्य चेत्यपि बोध्यम्। पृथग्बिन्दूपस्थितिस्तस्य चाख्यातार्थे ऽभेदान्वय इत्येतत्पचतात्पर्यम्। यद्व कर्मप्रवचनीययुक्त कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगीति भाष्याशयार्थ ॥

---

नैष दोष। नेमे अप्यर्था निर्दिश्यन्ते। किं तर्हि। परपदार्था इमे निर्दिश्यन्ते। एतेष्वर्थेषु यत्पद वर्तते तत्प्रत्यपि कर्मप्रवचनीयसञ्ज्ञो

---

तदयमर्थ। स्यादित्यादिपद कर्तृसामान्यवाच्यपि यदा सामर्थ्यात्कर्तृविशेषे बिन्दौ वर्तते तदा तत्प्रत्यपि कर्मप्रवचनीय। सर्पिःशब्दस्तु समुदायएव वर्तते नावयवमात्रे। अत एवावयवोपजनितव्यतिरेके षष्ठी भवति। अथवेति। बिन्दुकर्तृकत्व क्रियाया द्योतयितुमपि प्रयुज्यते इति बिन्दु प्रति कर्मप्र

---

गम्यमानस्य बिन्दोरवयवावयविभावसम्बन्धे। इयमेव ह्यपिशब्दस्य पदार्थ द्योतकता नाम। कर्मप्रवचनीययुक्ते द्वितीया तु नेह प्रवर्तते। सर्पिषो

---

विषयस्यैव भवति, यदि तस्य बिन्दुमात्रमपि न लभ्यत इत्यत्रापिशब्दसामर्थ्याद्बिन्दुरिति गम्यते तदाह। 'मात्राबिन्दुस्तोकमित्यस्यार्थेऽपिशब्दो वर्तत इति'। तदुपजनिते च व्यतिरेके सर्पिष इति षष्ठी, द्वितीया तु न

उपलक्षणार्थमिति । (कै)

यत्पदप्रयोग विनापि तदर्थोऽपिशब्देनावश्य द्योत्यते तादृशापेः कर्मप्रवचनीयत्वमित्यर्थस्तत्फलितमाह

तेन यस्मिन्निति । (कै)

पदान्तरस्य तद्वाचकत्वेन प्रसिद्धातिरिक्तस्याभिधानशक्तिर्नास्त्यपिशब्दसमभिव्याहार विनेति शेष । अर्थात्तत्समभिव्याहारेऽस्तीति लभ्यम । एव च सर्पिष इत्येतत्तत्सम्बन्धिबिन्दुपर बोध्यम् । वागादिशब्दे स्त्रीत्वस्य प्रकृतिवाच्यत्वेऽपि द्योतकटाबादिप्रयोगवत् तस्य द्योतकत्ववच्च बिन्दुशब्दप्रयोगेऽप्यपेस्तद्द्योतकत्वाच्चतिरित्याह

ततश्चेति ॥ (कै)

---

भवतीति । अथवा यदत्र कर्मप्रवचनीययुक्त,नाद प्रयुज्यते । किं पुनस्तत् ।

---

वचनीयो ऽपि न तु सर्पिःप्रतीति भाव । बिन्दोस्तर्हीति । ननु यदा बिन्दुशब्दो न प्रयुज्यते तदापि कर्मप्रवचनीय । तदुच्यते वृत्तिकारै । पदान्तरस्याप्रयुज्यमानस्यार्थ पदार्थ इति न चाप्रयुक्ते द्वितीया विधातु शक्या अत्राह । पदार्थग्रहणमिहोपलक्षणार्थमुपात्त तेन यस्मिन् पदाथ

---

बिन्दुना योगो न त्वपिनेत्युक्तत्वात् । सम्भवन नाम प्रतयुत्कर्षमाविष्कर्तुं मत्युक्ति । अपिसिञ्चेन्मूलसहस्रम् । अपिस्तुयाद्विष्णुम् । अन्ववसर्गं कामचारानुज्ञा । अपिसिञ्च । अपिस्तुहि । गर्हायाम् । धिग्देवदत्तमपि-

---

भवति अपिना योगाभावात् स हि स्यादित्यनेन सम्बध्यत इत्युक्तम् । 'अधिकार्थवचनेनेति' । यावत्यर्थेऽस्य सामर्थ्यं ततोऽधिकमर्थं ब्रुवन् यत् सेकादौ शक्तिमाविष्करोति तत्सम्भावनमित्यर्थ । 'अपि सिञ्चेदिति । सम्भावने लिङ्ा तस्यैव दुष्करविषयतामपिराह, कामचार इच्छाप्रवृत्ति, 'अपि

ननु प्रथमायाः कारकाधिकारेऽपठितत्वात्कथं कारकविभक्तित्वमत आह

सर्वत्रैवेति । (कै)

क्रियाजनकार्थकत्वमेव कारकविभक्तित्वमिति भावः ॥

अन्तरङ्ग इति । (कै)

अपिद्योत्यो बिन्दुरिति तस्य कथमपि संबन्धो बहिरङ्ग इति चिन्त्यम् । अपिना द्योत्यद्योतकभावः संबन्धः स्वाभाविक इति तस्य कथं स्यादित्येतत्सम्बन्धोत्तरकालिकता तस्माद्वाचनिकोऽयं न्याय इति तत्त्वम् ॥

---

बिन्दु । बिन्दोस्तर्हि कस्मान्न भवति । उपपदविभक्तेः कारकविभक्तिर्बलीयसीति प्रथमा भविष्यति ॥

---

पदान्तरस्याभिधानशक्तिर्नास्ति तत्रापि कर्मप्रवचनीय । ततश्च गतार्थो बिन्दुशब्दो यदा विस्पष्टप्रतिपत्तये प्रयुज्यते तदाप्यपि कर्मप्रवचनीयसंज्ञो भवति । उपपदविभक्तेरिति । कारकविभक्तिरत्र प्रथमा । सर्वत्रैव वाक्येऽवश्यभाव्यं क्रियया तत. सत्तया तत्र बिन्दो• प्रथमं स्यादित्यनेन संबन्धोऽन्तरङ्गः पश्चात्तु तद्द्वारकोऽपि शब्देन ॥

---

स्तुयाद्वृषलम् । समुच्चये । अपिसिञ्च । अपिस्तुहि । सिञ्च च स्तुहि चेत्यर्थं । यथायथमुपसर्गप्रादुर्भ्यामिति उपसर्गात्सुनोतीति च प्राप्तं षत्वं कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञाया बाधितत्वान्न भवति ॥

---

सिञ्चेति' । सिञ्च वा मा वा स्तुहि वा मा वा यथेष्टं कुर्वित्यर्थ' । शास्त्रोपशब्द । 'अपि सिञ्चेदिति' । गर्हार्थे लिङ् । 'उपसर्गसंज्ञाबाधनादिति' । स्यादित्यत्रोपसर्गप्रादुर्भ्यामिति सिच उपसर्गात्सुनोतीति षत्वप्रसङ्ग ॥

# अधिरीश्वरे। १। ४। ९७॥

**वक्ष्यमाणमपीति।** (कै)

"यस्मादधिकं यस्य चेश्वरवचनमिति" सूत्रे इत्यर्थः॥

**स निर्दिश्यते।** (कै)

अधिरुमीश्वरत्वमुच्यते इत्यर्थादिति भावः॥

**प्रथमा न प्राप्नोतीति।** (कै)

सूत्रे ईश्वरेणेप्सिततमस्योदयात् तं प्रत्यपि कर्मप्रवचनीयत्वादिति भावः॥

---

अधिरीश्वरे। १। ४। ९७। अधिरीश्वरवचने उक्तम्। किमुक्तम्। यस्य चेश्वरवचनमिति कर्तृनिर्देशश्चेदवचनात्सिद्धम्। प्रथमातु

---

अधिरीश्वरे। १। ४। ९७। उक्तमिति। वक्ष्यमाणमपि बुद्धा निरूपितत्वादुक्तमित्युक्तम्। कर्तृनिर्देशश्चेदिति। यदीश्वरवचनमित्यनेन पदेनेश्वरः स्वामी भृत्यनियोगादौ यः कर्ता स निर्दिश्यते तदानेन स्वामिनः सप्तमी विधीयते। अधिब्रह्मदत्ते पञ्चालाः इति। तत्राधिकरणत्वादेव सप्तमी सिद्धा। ब्रह्मदत्ते स्थिताः पञ्चालाः इत्यर्थविगमात्। पञ्चालाः इति च प्रथमा न प्राप्नोति। कर्मप्रवचनीययुक्ते द्वितीयेति द्वितीयया बाधितत्वात्। स्व-

---

अधिरीश्वरे। १। ४। ९७। स्वस्वामिभावे द्योत्ये ऽधिः कर्मप्रवचनीयः स्यात्। इह स्वात्स्वामिनो वा पर्यायेण कर्मप्रवचनीयविभक्तिर्न तु द्वौने "उपोऽधिके च" त्यनेवान्यतरस्यामादेव। अधिभुवि रामः। अधिरामे भूः।

---

अधिरीश्वरे। १। ४। ९७। 'तदयमिति'। यथा द्रोण इत्यत्र द्रोणीव्रीह्योस्सम्बन्धे संज्ञा उपोऽधिके चेत्यत्राधिकाधिके सम्बन्धे तथात्रा-पीत्यर्थः। विभक्तिस्तु यथान्यतरस्यामुच्यते इह तु न तथेत्याह। 'तत्र कदा चिदिति'। यस्य चेश्वरवचनमित्यत्रार्थद्वयम् ईश्वरशब्दो भावप्रधानः, यस्य स्वामिन ईश्वरत्वमुच्यते तस्मात्स्वामिनः सप्तमीत्येकः, यस्य स्वमीश्वर उच्यते

## ईश्वरेण यदुच्यते इति । (कै)

अवध्यत इत्यर्थ ॥ ईश्वरेण स्वनिरूप्यधर्मवत्तया यदुच्यत इत्यर्थो वा निरूपकस्यैव कर्त्तृत्वविवक्षा न लौकिकत्वस्य देशरूपत्वेन । पञ्चालानामथाधारत्वेन सप्तमी सिद्धेत्यत आह

## तत्रेति । (कै)

आसनादिक्रियोपजनित सम्बन्ध स्वस्वामिभावादि ॥ ननु ब्रह्मदत्तादपि द्वितीयापत्तिरत आह

## स्वं चेति । (कै)

तस्यैव कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वेन ब्रह्मदत्ताच्च द्वितीयेति भाव ॥

---

धपत्तिस्तु । स्ववचनात्सिद्धमिति । अधि स्व प्रति कर्मप्रवचनीयसञ्ज्ञो भवतीति वक्तव्यम् ।

---

चनादिति । अधिब्रह्मदत्ते पञ्चाला इत्यस्याऽन्यथासिद्धत्वादधिस्वे इति वक्तव्यम् अधिपञ्चालेषु ब्रह्मदत्त इत्यर्थम् । ईश्वरवचनमिति च कर्तृषष्ठ्या समास ईश्वरेण यदुच्यते स्वतन्त्रकर्मप्रवचनीययुक्ते सप्तमीति । यदि वा यस्य सम्बन्धिन ईश्वरस्य वचन सप्तमी तत्र । पञ्चालेष्वासनादि क्रियोपजनिते सम्बन्धे षष्ठ्या प्राप्ताया सप्तमी विधीयते । स च प्रत्यये कर्मप्रवचनीयसञ्ज्ञा न तु स्वामिनमिति स्वामिन प्रथमैव भवति ॥

---

एतच्च सञ्ज्ञासूत्र नारम्भणीयम । उत्तरार्थत्वे तु योगो न विभजनीय इति "यस्मादधिकमि"त्यत्र वक्ष्याम ॥

---

तस्मात्स्वात्सप्तमीत्यपर', यत्र यदा स्वाम्यर्थे व्यतिरेकविवक्षा तदा तत सप्तमी स्वस्य तु व्यतिरेके तत इति न पुनरुभाभ्या युगपद्भवति एकयैव विभक्त्या द्विष्ठस्यापि सम्बन्धस्याभिधानादिति मत्वा कदा चिदित्युक्तम् । 'ब्रह्मदत्त-ब्रह्मदत्त स्वामीत्यर्थ ॥ । 'ब्रह्मदत्तस्य स्वा पञ्चाला इत्यर्थ । 'अधिपञ्चालेष्विति' । पञ्चालानां

# लः परस्मैपदम् । १ । ४ । ९९ ॥

नन्वस्य प्रथमान्तत्वे लकाराणामेव परस्मैपदसञ्ज्ञा स्यात् तथा चानुदात्तङिज्ञ्यो लकारा एव न स्युः । किं च तङानावित्यत्र प्रथमान्तस्य सम्बन्धो न प्राप्नोत्यत आह

**षष्ठीति ।** (कै)

अत एव "टित आत्मनेपदानामि"त्यादि चरितार्थम् । तङानावित्यादेस्तु तङानभाविनि लक्षणायां गौरवमतः षष्ठ्यन्तत्वमेवादेशापेक्षया युक्तमिति भावः ॥

---

ल परस्मैपदम् ॥ १ । ४ । ९९ ॥ लादेशे परस्मैपदग्रहणं पुरुषबाधितत्वात् । वा लादेशे परस्मैपदग्रहणं कर्तव्यम् । किं कारणम् ।

---

ल परस्मैपदम् । १ । ४ । ९९ ल । इत्यादेशापेक्षा षष्ठी । लादेशाः परस्मैपदसञ्ज्ञा इत्यर्थः । लादेश इति । लस्येत्यत्र परस्मैपदमिति वक्तव्यम् ।

---

ल परस्मैपदम् । १ । ४ । ९९ ॥ लकारस्यादेशाः परस्मैपदसञ्ज्ञाः स्युः । पचन्त पश्य ॥

---

ल परस्मैपदम् । १ । ४ । ९९ ॥ 'ल इति षष्ठीति' । अथ प्रथमाबहुवचने को दोष, 'आम' इति कावस्थायामेव लुप्यमानस्य लिट सञ्ज्ञा स्यात् ततश्चैधामित्यत्राम स्याद् नह्यतो लिट्परः सम्भवति, शेषादेव परस्मैपदमिति नियमात्, ज्ञापकात् सिद्ध, यदयमाम्प्रत्ययवदित्याह तज् ज्ञापयति भवत्यात्मनेपदिभ्योऽप्यामिति, अथ तर्हि दोषो लकारस्यैव सञ्ज्ञा स्यान्न तदादेशानां तिबादीनामिति, स्थानिवद्भावात्तेषामपि भविष्यति, तङानावात्मनेपदमित्यत्र तर्हि ल इति प्रथमान्तस्य तङानाभ्यां सम्बन्धो न

## लस्येत्यत्रेति । (कै)

लस्य तिप्सञ्ज्ञीत्यत्रेति भाव ॥ भाष्ये

## लादेशेत्यस्य (भा)

लादेशप्रकरणे इत्यर्थ ॥

## बाध्यत इति । (कै)

इष्टानुरोधादिति भाव । एतेन पर्यायज्ञापनेनापीद चरितार्थ-मित्यपास्तम् ॥ ननु तृतीय एव परस्मैपदसञ्ज्ञाऽस्तु किं ज्ञापका-श्रयणेनेत्यत आह

---

पुरुषबाधितत्वात् इह वचने हि सज्ञा बाधनम् । इह हि क्रियमाणे चानवकाशा पुरुषसञ्ज्ञा परस्मैपदसञ्ज्ञा बाधेत । परस्मैपदसञ्ज्ञाप्यनवकाशा सा वचनाद्भविष्यति । सावकाशा परस्मैपदसञ्ज्ञा । कोऽवकाश । शतृक्वसू

---

इह तुवचने एकसञ्ज्ञाधिकारात्परस्मैपदसञ्ज्ञा शतृक्वसो सावकाशा पुरुषसञ्ज्ञास्तिङ्न्तु बाधेरन्नित्यर्थ । सिचि वृद्धौ लिति । चकारादेव लिङादिकसञ्ज्ञाधिकारोऽत्र बाध्यत इति भाव । आत्मनेपदसञ्ज्ञया परस्मै

---

स्यात् नहि तङानौ लौ भवत । ननु चैव विज्ञास्यते तङानभावो लकार एव तङानाविन्युक्तौ इति एवमपि त्वन्तरे सति न क्लिष्टकल्पना युक्ता तस्माल्ल इति षष्ठी । 'आदेशापेक्षेति' । न च सञ्ज्ञापेक्षा, लकारस्य परस्मैपदमिति सञ्ज्ञा भवतीति, कुत, सामानाधिकरण्येन प्रायेण सञ्ज्ञा विधानात् । किञ्च अपि यो दोष सोऽस्मिन्नपि स्याद् उभयथ लकारस्य मञ्ज्ञित्वात् तस्मादादेशापेक्षा षष्ठी । यद्येवमनवकाशा पुरुषसञ्ज्ञा परस्मैपदसञ्ज्ञा शतृक्वसो सावकाशा बाधेत, अस्ति तु लकारस्य परस्मैपदसञ्ज्ञा तिङा तु पुरुषसञ्ज्ञेति भिन्न विषयत्वान्नास्ति बाधप्रसङ्ग, यद्यपि ज्स्यद्येपि तिबादीनामादेशानामपि स्थानिवदादेश इत्यनेन परस्मैपदसञ्ज्ञा भविष्यति

## आत्मनेपदेति ॥ (कै)

ननु ज्ञापकात्परस्मैपदसंज्ञया समावेशेऽप्यात्मनेपदसंज्ञया पुरुषसंज्ञानां समावेशो न स्यादत आह

## सामान्यापेक्षं चेति । (कै)

पुरुषसंज्ञायां परस्मैपदात्मनेपदग्रहणानुवृत्त्या समवेशसिद्धिरनुवृत्तिरेव लिङ्गेन विवचिता । एतदर्थमेव चात्र प्रकरणे पुरुषसंज्ञादिविधानमित्यन्ये ॥

---

अवकाशः सिचि वृद्धौ तु परस्मैपदग्रहणं ज्ञापकं पुरुषाबाधकत्वस्य । यदयं सिचिवृद्धिः परस्मैपदेष्विति परस्मैपदग्रहणं करोति तज्ज्ञापयत्याचार्यो न पुरुषसंज्ञा परस्मैपदसंज्ञां बाधत इति ॥

---

पदसंज्ञाया बाधनं यथा स्यादित्येवमर्थं लिङ्प्रकरणे ऽनयोः संज्ञयोर्विधानम् । सामान्यापेक्षं च ज्ञापकमित्यात्मनेपदसंज्ञयापि पुरुषसंज्ञानां समावेशो भवति । अन्यथा पुरुषसंज्ञाः सावकाशास्तिङ्क्षु अनवकाशया आत्मनेपदसंज्ञया बाधेरन् ॥

---

तथापि तस्या अनाकडारीयत्वात्समावेशसिद्धिः, षष्ठीपक्षेऽपि ज्ञापकात्सिद्धं, यदयं 'सिचि वृद्धिः परस्मैपदेषु' इत्याह तत् ज्ञापयति भवति तिङामप्येषा संज्ञेति, नहि सिज्विषये शतृक्वसू सम्भवतः, सामान्यापेक्षं च ज्ञापकमिति आत्मनेपदसंज्ञया पुरुषसंज्ञानां समावेशसिद्धिः, अन्यथा परस्मैपदेषु सावकाशाः पुरुषसंज्ञाः तङ्स्वनवकाशयात्मनेपदसंज्ञया बाधेरन् । अथ वा पुरुषसंज्ञायां परस्मैपदात्मनेपदग्रहणानुवृत्तेरयमर्थो भवति, षट् परस्मैपदात्मनेपदसंज्ञकाः सन्तस्त्रीणि त्रीणि पदानि भूत्वा प्रथमादिसंज्ञा भवन्तीति तेन समावेशसिद्धिः ।

# तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः । १।४।१०१ ॥



ननु तिङस्त्रीणित्रीणीत्यनेनात्मनेपदचिकानामपि ग्रहणं सिध्यतीत्यत आह

तिङ्न पडिति ॥ (कै)

नन्वात्मनेपदग्रहणे कृते परस्मैपदसम्बन्धिनां संज्ञा न स्यादिति दोषस्तदवस्थ एवेत्यत आह

---

तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमाः ॥ १ । ४ । १०१ ॥ प्रथममध्यमोत्तमसंज्ञायामात्मनेपदग्रहणं समसंख्यार्थम् । प्रथममध्यमोत्तमसंज्ञायामात्मनेपदग्रहणं कर्तव्यम् । आत्मनेपदानां च प्रथममध्यमोत्तमसंज्ञा भवन्तीति वक्तव्यम् । किं प्रयोजनम् । समसंख्यार्थम् । संख्या-

---

तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमा । १ । ४ । १०१ ॥ तिङां षट् त्रिका सञ्ज्ञास्तिस्र इति वैषम्याद्यथासंख्यं न प्राप्नोतीति मत्वाह । प्रथमेति । आत्मनेपदग्रहणे च पृथक् क्रियमाणे सूत्रं परस्मैपदविषयमेव

---

तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमा । १ । ४ । १०१ ॥ कृतद्वन्द्वानामेकशेषात् प्रथमेत्यादयः षट् संज्ञा तिङः षट् त्रिका क्रमात्प्रथ-

---

तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमा । १ । ४ । १०१ ॥ त्रीणित्रीणीति वीप्साया द्विर्वचनं, तत्र च समुदायस्यावयवयोश्च पृथक्पदत्वमिष्यते, आ पचसि पचसि देवदत्तेत्येकान्ततया यथा स्यात् कुण्डं कुण्डं वाग्वाग् धयचन्नमधन्नित्यादौ पूर्वपदेष्वनुस्वारादि पदकार्यं यथा स्यादिति, तेन पदच्छेदकाले

## आत्मनेपदेति ॥ (कै)

सहविवक्षाभावादेकशेषो न प्राप्नोतीत्यत आह

## आकृतीति । (कै)

इदमुपलक्षणं व्यक्तिपक्षेऽपि तत्प्रत्याख्यानात् । यदेकशेषशब्देन तन्त्रं लक्ष्यते ॥ नन्वेतत्संज्ञाप्रवृत्तेः पूर्वं प्रथममध्यमयोरिति व्यवहारो न युक्तोऽत आह

---

तानुदेशो यथा स्यात् । अक्रियमाणे ह्यात्मनेपदग्रहणे तिङः संज्ञा षट् सन्तीति वैषम्यात्सङ्ख्यातानुदेशो न स्यात् । क्रियमाणेऽपि चात्मनेपदग्रहणे आनुपूर्व्यवचनं च । आनुपूर्व्यवचनं च कर्तव्यम् । अक्रियमाणे हि कस्यचिदेव त्रिकस्य प्रथमसंज्ञा स्यात् कस्यचिदेव मध्यमसंज्ञा कस्यचिदेवो-

---

भवतीति वाक्यभेदादेकेन वाक्येन परस्मैपदानां तथा तिङः संज्ञा द्वितीयेनात्मनेपदानामिति सिद्धमिष्टम् । वैषम्यादिति । यद्यप्येकैकस्य त्रिकस्यानेकसंज्ञाकरणे प्रयोजनाभावः तथापि कस्यचित्त्रिकस्य काचित्संज्ञेत्येतावल्लभ्यते न तु यथाभिमतविषयविभागलाभः । आनुपूर्व्यवचनं चेति । अत्र सूत्रे त्रिका

---

मादिसंज्ञाः स्युः । शब्दक्सो सावकाशापि परस्मैपदसंज्ञा प्रथमादिसंज्ञाभिर्न बाध्यते सिचिवृद्धिः परस्मैपदेष्विति लिङ्गात् । तथा परस्मैपदे लब्धावकाशापि

---

त्रीणित्रीणीत्येकं पदं द्वे वा । इह तिङां षट् त्रिकाः संज्ञास्तु तिस्र इति वैषम्यात् सङ्ख्यातानुदेशो न प्राप्नोति । अत्र यद्यप्येकैकस्य त्रिकस्यानेकसंज्ञाविधाने प्रयोजनं नास्ति नैतावता यथाभिमतविषयलाभस्तत्राह । 'तिङाष्टादश प्रत्यया इति' । एवं मन्यते संज्ञा अपि षडेव, कथमेकशेषनिर्देशोऽयं तत्र यदि प्रथमश्च प्रथमश्च प्रथमौ मध्यमश्च मध्यमश्च मध्यमौ उत्तमश्च उत्तमश्चोत्तमौ प्रथममध्यमोत्तमा इति कृतैकशेषाणां द्वन्द्व

## प्रसिद्धिमिति। (के)

सिद्धान्तकालिकीं प्रसिद्धिमित्यर्थः ॥ भाष्ये

## किं पुनरत्रेति। (भा)

यद्यप्यत्र व्याख्यानतः कृतद्वन्द्वानामेवैकशेषस्तथापि लोके कथं न्याय्यमिति प्रश्नः ॥ नन्वस्य बहुशब्दस्य बहुत्वार्थकत्वे एकवचनानुपपत्तिरत आह

---

त्तमसंज्ञा स्यात्। न वैकशेषनिर्देशात् यत्तावदुच्यते आत्मनेपदग्रहणं कर्तव्यं समसंख्यार्थमिति तन्न कर्तव्यम्। संज्ञा अपि षडेव निर्दिश्यन्ते। कथम्। एकशेषनिर्देशात्। एकशेषनिर्देशोऽयम्। अथैकस्मिन्नेकशेषनिर्देशे सति किमयं कृतैकशेषाणां द्वन्द्वः प्रथमश्च प्रथमश्च प्रथमौ। मध्यमश्च मध्यमश्च मध्यमौ। उत्तमश्चोत्तमश्चोत्तमौ। प्रथमौ च मध्यमौ

---

णामुच्चारणं नास्ति केवलं त्रीणित्रीणीति वीप्सया प्रतिपत्तिस्तेषां तत्रानियमप्रसङ्गे नियमार्थमानुपूर्व्यग्रहणं च कर्तव्यमित्यर्थः। एकशेषनिर्देशादिति। आत्मत्वभिधानाश्रयेण प्रत्याख्यातं सूत्रं शास्त्रप्रक्रियासंपत्त्यर्थमेव संपद्यते। अथैकस्मिन्निति। उभयथा संभवात्प्रश्नः। प्रथममध्यमयोरिति प्रसिद्धि-

---

प्रथमादिसंज्ञा तङ्ष्वात्मनेपदसंज्ञया न बाध्यते कृतद्वन्द्वानामेकशेषेण तङ्षु प्रतिपदविधेयत्वात्। न चैवमपि परस्मैपदात्मनेपदसंज्ञाभ्यां पुरुषसंज्ञायाः पर्याय स्यादिति वाच्यम्। शानुत्तमौवेत्यस्य सामान्यापेक्षज्ञापकत्वात्। इह

---

क्रियेत ततो नाभिमतसंख्यातानुदेशः स्यात् तस्मात्कृतद्वन्द्वानामेकशेष प्रथममध्यमोत्तमाश्च प्रथममध्यमोत्तमाश्च प्रथममध्यमोत्तमा इति। न चैवमपि न विज्ञायते किमादित आरभ्य त्रीणि वचनानि गृह्यन्ते आहो स्विदन्ततस्त्रिकपरिग्रह इति। नहि त्रिकपरिग्रहेऽपि यथासंख्यशास्त्रं क्रमते

बहुशब्दस्येति ॥ (कै)

नन्वेवमवयवबहुत्वप्रतीतिर्न स्यादत आह

समुदायस्येति ॥ (कै)

भाष्ये

लोकत इति । (भा)

विट्पव्यस्येत्यादिकृतेरित्यर्थः ॥

---

च उत्तमौ च प्रथममध्यमोत्तमा इति । आहो स्वित्कृतद्वन्द्वानामेकशेषः । प्रथमश्च मध्यमश्चोत्तमश्च प्रथममध्यमोत्तमाः प्रथममध्यमोत्तमाश्च प्रथममध्यमोत्तमाश्च प्रथममध्यमोत्तमा इति । किं चातः । यदि कृतैकशेषाणां द्वन्द्वः । प्रथममध्यमयोः प्रथमसंज्ञा प्राप्नोति उत्तमप्रथमयोर्मध्यमसंज्ञा प्राप्नोति । मध्यमोत्तमयोरुत्तमसंज्ञा प्राप्नोति । अथ कृतद्वन्द्वानामेक-

---

माश्रित्यैतदुच्यते । व्याख्यानान्निर्णय इति मत्वाह । कृतद्वन्द्वानामिति ॥ बहुशक्तिकिटकमिति । एकशेषे कृते द्वन्द्वः । जातिरप्राणिनामित्येकवद्भाव । बहुशब्दस्यात् वैपुल्यवचनइत्येकवचनम् । समुदायस्य वैपुल्यमवयवानां प्रचयाद्भवति । यदा तु समाहारद्वन्द्वे कृते एकशेषः क्रियते तदा

---

सूत्रत्रयेऽपि महासंज्ञाकरणं पूर्वाचार्यानुरोधात् । इह नौस्थिनौस्थीत्येकं पदम् । द्वे वेति हरदत्तः । तत्र सत्यामप्यवान्तरपदसंज्ञायां महापदसंज्ञा माश्रित्य संहितैकपदे नित्येत्यस्य प्रवृत्तिः । अन्यथा समासादावपि पृथक्छे-

---

किं तर्हि विहितेषु संज्ञानां क्रमेण संबन्धं विधत्ते, एवं तर्हि लोकत एतत्सिद्धं तद्यथा, विट्पव्यस्य दाभ्यां, दाभ्यामस्मिन्प्रदेश इति न चोच्यते आनुपूर्व्येणेति, अथ च विट्पव्यस्य सूत्रस्यादित आरभ्य आनुपूर्व्येण दाभ्यां दाभ्यामन्याभ्यामभिसंबध्यते न याभ्यां काभ्यां चित् तथ तिङोऽष्टादश प्रत्यया इत्यनेनादित आरभ्य त्रिकाणामानुपूर्व्येण ग्रहणं नेच्छात इति

तथेहापीति । (कै)

प्रथममध्यमेत्यादि । महामहाकरणं तु प्राचामनुरोधेनैवेति भावः । "नमाग्रे नव विहव्य" इति सर्वानुक्रमः ॥

---

ग्रेय न दोषो भवति । यथा न दोयस्तथास्तु । किं पुनरत्र न्याय्यम् । उभयमित्याह । उभयं हि दृश्यते । तद्यथा । षड्शक्तिकिटक बह्ननि शक्तिकिटकानि । बहुस्थाली पिटरं बह्ननि स्थालीपिठराणि । यदप्युच्यते क्रियमाणेऽप्यात्मनेपदग्रहणे चानुपूर्व्यवचनं कर्तव्यमिति । न कर्तव्यम् । लोकत एतत्सिद्धम् । तद्यथा लोके विहव्यस्य द्वाभ्यां द्वाभ्यामभिरपस्येय इति न चोद्यते चानुपूर्व्येणेति चानुपूर्व्येण चोपस्थीयत इति ।

---

बह्ननि शक्तिकिटकानीति भवति । लोकत इति । यथा पङ्क्तिस्थेषु ब्राह्मणेषु दीवौ ब्राह्मणानानयेत्युक्ते चानुपूर्व्येणानयनं भवति न तु व्युत्क्रमेण तथेहापि भवतीतिभाव । विहव्यस्येति । विहव्याख्यस्य सूक्तस्य द्वाभ्यां द्वाभ्यामभिरपस्थेय इत्युक्ते चानुपूर्व्येण ऋग्द्वयं गृह्यते न तु व्युत्क्रमेण ।

---

दापत्ते । दिरुक्तमध्येऽपि पदान्तरप्रयोगापत्तेश्च । अत एव ताता पिण्डानामित्यादौ वेदे ऽवग्रह क्रियते । यथा च द्विरुक्ते महापदसंज्ञाऽवान्तरसंज्ञा च तथा नित्यवीप्सयोरित्यत्र वक्ष्याम ।

---

दर्शयितुं तिङ्ग्रहणेन संनिवेशोऽस्तीति दर्शितं, न च परस्मैपदसंज्ञक इत्यादिना तु सतद्ग्रहानामेकशेषो न हतैकशेषाणां द्वन्द्व इति दर्शितं, यदि वा परस्मैपदग्रहणमात्मनेपदग्रहणं चानुवर्तते तिङ्ग्रहणं तु प्रत्येकसोन्नित्यर्थं तदनुवृत्तौ च द्वौ राशी भवत, तयोश्च व्यापारभेदेन सूत्रमेतत्प्रवर्तते, तत्र चैकैक त्रयस्त्रिका इति यथा सङ्ख्यसिद्धि, तत्र न चेत्यादिना राशिद्वयं दर्शितम, तत्रेत्यादिना तु व्यापारभेद, अत्रापि महासंज्ञाकारणं पूर्ववत् ।

# विभक्तिश्च । १ । ४ । १०४ ॥

अननुवृत्तौ स्वरितत्वप्रतिबद्धत्वमभावप्रतियोगितया बोध्यम् ॥ स्वरितत्वमस्ति नवेति विचारतात्पर्यम् । स्वरितत्वमाचार्याणामप्यनुमेयमेवेति बोध्यम् ॥

## प्रत्येकमिति । (कै)

नन्वस्याः प्रत्येकं सत्त्वेऽपि द्वितीयायां चेत्यादिव्यवहारात् त्रिकस्य त्रिकस्य प्रथमादयः सप्त संज्ञा अवश्यमभ्युपेया एव च तथा प्रथमयोरित्यत्राप्युपपत्तिरिति चेन्न । पाणिनिना तासामकृतत्वात् ।

---

विभक्तिश्च ॥ १ । ४ । १०४ ॥ चौथिचीथीत्यनुवर्तते उताहो न । किं चातः यद्यनुवर्तते । अत्रैन त्या विभक्तावित्यात्वं न प्राप्नोति । अथ निवृत्तम् । प्रथमयो पूर्वसवर्ण इत्यत्र प्रथमयोरेव ग्रहणं प्राप्नोति ।

---

विभक्तिश्च । १ । ४ । १०४ । सति प्रयोजने स्वरितत्वप्रतिबद्धे शब्दानामनुवृत्त्यनुवृत्ती भवत लिङ्गदर्शनं च पक्षद्वयेऽप्यस्ति इति संदेहात्प्रश्न । चौथिचीथीति त्यात्व न प्राप्नोतीति । नह्यत्रैन् शब्दात्परं युगपत्त्रिकमस्ति । प्रथमयोरिति । प्रत्येकं संज्ञित्वे विभक्तिसमुदायस्य विभक्तिग्रहणेना-

---

विभक्तिश्च । १ । ४ । १०४ ॥ सुमिङौ विभक्तिसञ्ज्ञौ स्त । चकार' पुरुषवचनसञ्ज्ञाभ्या समावेशार्थ । तिङा विभक्तिसंज्ञाया प्रयोजन नविभक्तौ तुस्मा इति, सुपा तु त्यदाद्यत्वादिकमपि ॥

---

विभक्तिश्च । १ । ४ । १०४ ॥ चकार पुरुषवचनसञ्ज्ञाभ्या समावेशार्थ तिङा व्यवहितानामपि स्वरितत्वादनुवृत्ति, तिङा विभक्तित्वे प्रयोजनम् स्यातामादौ 'न विभक्तौ तुस्मा' इति निषेध, सुपां तु त्यदाद्यत्वादिकमपि ।

सिद्धान्ते तु त्रिकस्य विभक्तित्वेऽवयवधर्मविभक्तित्वस्य त्रिके आरोपे वा यौगिका एव ते व्यवहाराः संभवन्तीति ताः संज्ञाः सूत्रकृता न कृता इति प्रतीमः ॥

## विभक्तिसमुदायस्येति । (कै)

जनपदसमुदायस्य जनपदग्रहणेनाग्रहणवदिति भावः ॥

## समुदायद्वयापेक्षानुपपत्ताविति । (कै)

## प्रथमाविति । (कै)

विशेष्यमचीति विशेषणमिति भावः ॥

## अजादित्वासम्भवादिति । (कै)

यद्यपि शिवोऽर्च्य इत्यादावुक्ते कृते सम्भवोऽस्ति तथापि तत्र "नादिचीति" निषेध इति भावः ॥ एकदेशी शङ्कते

## ननु चेति ॥ (भा)

---

यद्येवमिच्छसि तथास्तु । अस्तु तावदनुवर्तत इति । ननु चोक्तमद्य न्या विभक्तावित्यत्वं न प्राप्नोतीति । वचनाद्भविष्यति । अथवा पुनरस्तु निवृत्तम् । ननु चोक्तं प्रथमयोः पूर्वसवर्ण इति प्रथमयोरेवग्रहणं प्राप्नोतीति । नैष दोषः । अचीत्यनुवर्तते । न चाजादी प्रथमौ प्रत्ययौ स्तः ।

---

ग्रहणात्प्रथमयोरिति समुदायद्वयापेक्षानुपपत्तौ प्रत्यययोरेव द्वयोरेव द्वयोर्ग्रहणं प्राप्नोतीत्यर्थः । वचनादिति । त्रिकस्य युगपत्प्रयोगाभावात्सामर्थ्यात्समुदायवृत्तिर्विभक्तिशब्दोऽवयवे वर्तिष्यतइति भाव । न चाजादी इति । सुशब्दो प्रथमो सुश्चाजादिर्यो भवतीति प्रत्यययोरजादित्वासंभवादवयवशब्दस्त्रिके समुदाये उपचाराद्वर्तत इति भावः । अजादी याविति । अजादी विशेष्यौ प्रथमयोरिति विशेषणं तेनौजसोरेव ग्रहणमस्त्वित्यर्थः । अजादीनां चेति । अचीत्यनुवर्तते । तत्र व्याख्यानात्कदादिविधि निर्धारणं

तद्व्याचष्टे

अजादीविशेष्याविति । (कै)

व्याख्यानाच्छब्दरूपविशेष्यमादाय तदादिविधिरिति भावः ॥ वस्तुतो निर्द्धारणमेकवचनान्तेन नेति "कारक" इति सूत्रे भाष्ये उक्तम् । शब्दरूप विशेष्यमादाय तदन्तविधिश्चामति गमके नेतीय शङ्कां युक्तैव तथापि तामुपगम्य पर एकदेशी समाधत्ते

यत्तर्हीति ॥ (भा)

भाष्ये

विभक्त्योरिति । (भा)

विभक्तिसमुदाययोरित्यर्थः । तौ च समुदायौ प्राचां वैयाकरणानां प्रथमादितीयादिसञ्ज्ञलेन प्रसिद्धावेव गृह्येते । न च तस्मादित्यनेन गा इत्येतद्व्यावृत्तये सवर्णदीर्घ एव परामृष्टव्यस्तस्य चरितार्थत्वादित्याशय । एतद्भाष्यमूलिका एव प्रथमाद्य सप्तम्यन्ताः स्वौजसादीनां सप्तानां त्रिकाणां सञ्ज्ञा इति बोध्यम् ॥

---

ननु चैवं विज्ञायते ऽजादी यौ प्रथमौ अजादीना वा यौ प्रथमाविति । यत्तर्हि तस्माच्छसो न पुंसीत्यनुक्रान्तं पूर्वसवर्णं प्रतिनिर्दिशति । तज्ज्ञापयत्याचार्य विभक्त्योर्ग्रहणमिति । अथवा वचनग्रहणमेव कुर्याद् औजसो पूर्वसवर्ण इति ॥

---

चाश्रयिष्यते अजादिषु यौ प्रथमाविति । एवमप्यौजसोरेव ग्रहणं स्यादिति चोद्यम् । यत्तर्हीति । एतान् गा पश्येत्यत्र नत्वनिवृत्त्यर्थं तस्मादित्युच्यते । औजसोरेव ग्रहणे ऽन्तरात् पूर्वसवर्णदीर्घादुत्तर शस सकारो न भवतीति किं तस्मादित्यनेन । तत् क्रियमाणं त्रिक द्वयग्रहणस्य ज्ञापकं सम्पद्यते ॥

# युष्मद्युपपदे समानाधिकरणे स्थानि-न्यपि मध्यमः । १ । ४ । १०५ ॥
# अस्मद्युत्तमः । १ । ४ । १०७ ॥
# शेषे प्रथमः । १ । ४ । १०८ ॥

विधिनियमसम्भवे विधेर्ज्यायस्त्वादाह

तत्रेति । (कै)

---

युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यम । १०५ । अस्मद्युत्तम । १०७ । शेषे प्रथम । १०८ । किमर्थमिदमुच्यते । युष्मदस्मच्छेय-

---

युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यम । १ । ४ । १०५ ॥ किमर्थमिति । किं लादेशविधानवाक्यैनैकवाक्यत्वादिष्यर्थमिदम् । अथ

---

युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यम । १ । ४ । १०५ ॥ लकारेण समानाधिकरणे युष्मदि प्रयुक्ते ऽप्रयुक्तेऽपि मध्यम स्यात् ।

---

अस्मद्युत्तम । १ । ४ । १०७ ॥ लकारसमानाधिकरणे ऽस्मदि स्थिते

---

शेषे प्रथम । १ । ४ । १०८ ॥ मध्यमोत्तमविषयादन्यत्र प्रथमपुरुष स्यात् । पचति पचत पचन्ति ॥

---

युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यम । १ । ४ । १०५ ॥ लस्य तिबादय इत्यनेनैकवाक्यतामापन्नेनानेन तिबादीना विशिष्टविधानमुत

---

"अस्मद्युत्तम" १ । ४ । १०७ ॥ यत्र युष्मदस्मदी द्वे अप्युपपदे भवतस्तत्र

---

"शेषे प्रथम" । १ । ४ । १०८ ॥ उपपद इति निवृत्त शेष इति

वस्तुत एकवाक्यतापक्षेऽपि फलतो नियमत्वमेवैतैर्विनापि सिद्धेः ॥ शुद्धविध्यर्थमिति पूर्वपक्षोऽन्यथापि सिद्धेरितरनिवृत्त्यर्थमिति सिद्धान्त इति तत्त्वम् ॥

## समुदायस्येति । (कै)

विधेये शाब्द प्राधान्यमुद्देश्ये तूद्देश्यतालक्षणमार्थं प्राधान्यमिति सन्देहे बीज वक्तुं युक्तम ॥ सामान्यनियमेऽप्याह

## तृजादीति ॥ (कै)

---

वचन नियमार्थम् । वा नियमार्थोऽयमारम्भ । अथैतस्मिन्नियमार्थे विज्ञायमाने किमयमुपपदनियम युष्मदि मध्यम एव अस्मद्युत्तम एव । आहोस्वित्पुरुषनियम युष्मद्येव मध्यम अस्मद्येवोत्तम इति । किं चात ।

---

विहितेषु लादेशेषु नियमार्थमिदमिति प्रश्न । तत्रैकवाक्यतापक्षे इतरेतराश्रयपरिहाराय भाविनी सज्ञाऽऽश्रयितव्येति प्रतिपत्तिलाघवार्थं वाक्यभेदेन नियमपक्षे दर्शयितुमाह । युष्मदस्मदिति । किमयमिति ।

---

त्व पचसि दृश्यसे च । समानाधिकरणे किम् । त्वा पश्यति । त्वया दृश्यते ।

---

स्थानिन्यप्युत्तम स्यात् । अह पश्यामि दृश्ये वा । युष्मदस्मद्भ्या सामानाधिकरण्ये तु परत्वादुत्तम एव । अह च त्व च वृत्रहन्सयुज्याव सनिभ्य आ ॥

---

विहितानां तिबादीना भिन्नेनानेन वाक्येन नियम इति सशये नियम इत्याह । 'लस्येत्यधिकृत्येति' । विधिपक्षविधाने त्वितरेतराश्रय स्यात् सता तिबादीना प्रथमादिसज्ञा सज्ञाया च तिबादयो भाव्यन्त इति, स पुन

---

यदि कर्तृशक्ती स्वाधारनियते विवक्ष्येते तदा लकारोपि भेदेनोत्पद्यते

---

विषयसप्तमी न पुन परत इति तदाह । 'शेष इति' । 'मध्यमोत्तमविषया

| | Rs | |
|---|---|---|
| Padumawat Fasc 1-4 @ 2/ | 8 | 0 |
| Par ç sta Parvan (Text) Fasc 1 5 @ /6/ each | 1 | 14 |
| Prakrita Paingalam Fasc 1 ~ @ /6/ each | ° | 10 |
| Pr tl v raj R sa (Text) Part II Fasc 1 5 @ /6 each | 1 | 14 |
| D tto (Engl sl ) Part II Fasc 1 | 0 | 1° |
| Prakrita Laksanam (Text Fasc 1 | 1 | 8 |
| Paraçara Smrt (Text Vol I Fasc 1 8; Vol II Fasc 1 6; Vol III Fasc 1 6 @ /6/ each | 7 | 8 |
| Paraçara Inst tutes of (Engl sh) | 0 | 12 |
| Prabandl ac ntaman (Engl sl ) Fasc 1 3 @ /1°/ each | 2 | 4 |
| *Sama Vĕda Samh ta Text) Vols I Fasc 5 10; II 1 6; III 1 7; IV 1 6 V 1 8 @ /6/ each Fasc | 12 | 6 |
| Sankhya Sutra Vrtt (Text) Fasc 1 4 @ /6/ each | 1 | 8 |
| D tto (Engl sh) Fasc 1 3 @ /1°/ each | 2 | 4 |
| Sraddha Kr ya Kaumud Fasc 1-5 | 1 | 14 |
| Sucruta Samh ta (Eng ) Fasc 1 @ /1°/ | 0 | 12 |
| *Ta ttereya Samh ta (Text) Fasc 14-45 @ /6/ each | 12 | 0 |
| Tandya Brahmana (Text) Fasc 1 19 @ /6/ each | 7 | 2 |
| Trantra Vart ka (E gl sh) Fasc 1 ° @ /12/ | 1 | 8 |
| Tattva C ntamani (Text) Vol I Fasc 1 9 Vol II Fasc 2 10 Vol III Fasc 1 2 Vol IV Fasc 1 Vol V Fasc 1 5 Part IV Vol II Fasc 1 12 @ /6/ each | 14 | 4 |
| Tattvarthadh gama Sutrom Fasc 1 | 0 | 6 |
| Trikanda Mandanam (Text) Fasc 1 3 @ /6/ | 1 | 2 |
| Tul s Sat sa (Text) Fasc 1 5 @ /6/ each | 1 | 14 |
| Upam ta bhava prapa ca katha (Text) Fasc 1 6 @ /6/ each | 2 | 4 |
| Uvasagadasao Text and Engl sh) Fasc 1 6 @ /12/ | 4 | 8 |
| Vallala Car tam Fasc 1 | 0 | 6 |
| Varaha Purana Text) Fasc 1-14 @ /6/ each | 5 | 4 |
| Varsa Krya I aumud Fasc 1-6 @ /6/ | 2 | 4 |
| *Vayu Purana Text) Vol I Fasc 2 6 Vol II Fasc 1 7 @ /6/ each | 4 | 8 |
| V dhano Parigata, Fasc 1-4 | 1 | 8 |
| V snu Smrt Text Fasc 1 2 @ /6/ each | 0 | 12 |
| V vadaratnakara Text Fasc 1 7 @ /6 each | 2 | 10 |
| Vrhannarad ya Purana (Text Fasc 2 6 @ /6/ | 1 | 14 |
| Vrhat Svayambhu Purana Fasc 1 6 | 2 | 4 |

*Tibetan Series*

| | | |
|---|---|---|
| Pag Sam Thi S n Fasc 1-4 @ 1/ each | 4 | 0 |
| Sher-Phy n Vol I Fasc 1-5 Vol II Fasc 1 3 Vol III Fasc 1-5 @ 1/ each | 13 | 0 |
| Rtogs brjod dpag hkhr S n (T b & Sans ) Vol I Fasc 1 5; Vol II Fasc 1 5 @ 1/ each | 10 | 0 |

*Arabic and Persian Series*

| | | |
|---|---|---|
| Alamg rnamah w th Index (Text Fasc 1 13 @ /6/ each | 4 | 14 |
| Al Muqaddasi English) Vol I Fasc 1 3 @ /1°/ | 2 | 4 |
| A n Akbar (Text Fasc 1 °° @ 1/ each | 22 | 0 |
| D tto (Engl sh) Vol I Fasc 1 7 Vol II Fasc 1 5 Vol III Fasc 1 5 @ 1/1° each | ° | 1° |
| Akbarnamah w th Index (Text) Fasc 1 37 @ 1/ each | 37 | 0 |
| D tto Engl sh Fa c 1-8 @ 1 each | 8 | 0 |
| Arab c B bl ography by Dr A Sprenge | 0 | 6 |
| Badshahnamah w th Index (Text) Fasc 1 10 @ /6/ each | 7 | 2 |
| Cata ogue of Arab c Books and Manuscr pts | 1 | 0 |
| Catalogue of the Pers an Books and Manuscripts n the L brary of the As at c Soc ety of Bengal Fasc 1 3 @ 1/ each | 3 | 0 |
| D ct onary of Arab c Techn cal Terms and Append x Fasc 1 °1 @ 1/ each | °1 | 0 |
| Farhang Ra h d (Text Fasc 1 14 @ 1/ each | 14 | 0 |
| F hr st Tus or Tusy s l st of Shy ah Books (Text) Fasc 1-4 @ /12/ each | 3 | 0 |
| Futuh ush Sham of Waq di (Text Fasc 1 9 @ /6/ each | 3 | 6 |
| D to of Azad (Text) Fasc 1-4 @ /6 each | 1 | 8 |
| Haft Asman H story of the Pers an Masnawi, (Text) Fasc 1 | 0 | 12 |
| H s ory of the Cal phs (Engl sh Fasc 1-6 @ /1°/ each | 4 | 8 |
| Iqbalnamah Jahang r (Text Fasc 1 3 @ /6 each | 1 | 2 |
| Isabah w h Supplement (Text 51 Fasc @ /1°/ each | 33 | 4 |
| Maas r ul Umara Vol I Fasc 1 9 Vol. II Fasc. 1 9 Vol III 1 10 Index to Vol I Fasc 10-11 Index to Vol III Fasc 11 12 Index to Vol II Fasc 10-1° @ /6/ each | 13 | 2 |

* The other Fasc culi of these works are out of stock and complete cop es cannot be supplied.

# BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL

NEW SERIES, No 1101.



# महाभाष्यप्रदीपोद्योतः ।

# MAHĀBHĀSYAPRADIPODDYOTA

BY

NAGEÇA BHATTA

EDITED BY

PANDIT BAHUVALLABHA ÇASTRI.

VOL II FASCICULUS XII

CALCUTTA

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY 57 PARK STREET,

1904.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

No. 57, PARK STREET, CALCUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MR. BERNARD QUARITCH, 15, PICCADILLY, LONDON, W., AND MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | Rs. | |
|---|---|---|
| Advaita Brahma Siddhi, (Text) Fasc. 1–4 @ /6/ each | 1 | 8 |
| Advaitachinta Kaustubha, Fasc 1–2 | 0 | 12 |
| *Agni Purana, (Text) Fasc 4–14 @ /6/ each | 4 | 2 |
| Aitarēya Brahmana Vol I, Fasc 1–5 and Vol II, Fasc. 1–5; Vol III, Fasc 1–5, Vol IV, Fasc 1–5 @ /6/ | 7 | 8 |
| Anu Bhāṣyam, (Text) Fasc 2–5 @ /6/ each | 1 | 8 |
| Aphorisms of Sandilya, (English) Fasc 1 | 0 | 12 |
| Aṣṭasāhasrikā Prajñāpāramitā, (Text) Fasc 1–6 @ /6/ each | 2 | 4 |
| Açvavaidyaka, (Text) Fasc 1–5 @ /6/ each | 1 | 14 |
| Avadana Kalpalatā, (Sans and Tibetan) Vol I, Fasc. 2–5; Vol II, Fasc 1–5 @ 1/ each | 9 | 0 |
| Bāla Bhaṭṭi, Vol I, Fasc. 1 | 0 | 6 |
| Baudhayana Srauta Sutra, Fasc 1–2 @ /6/ each | 0 | 12 |
| *Bhamati, (Text) Fasc 4–8 @ /6/ each | 1 | 14 |
| Bhaṭṭa Dipika Vol. I, Fasc 1–4 | 1 | 8 |
| Bṛhaddevata (Text) Fasc 1–4 @ /6/ each | 1 | 8 |
| Bṛhaddharma Purana (Text) Fasc 1–6 @ /6/ each | 2 | 4 |
| Bodhicaryavatara of Cantideva, Fasc 1–2 | 0 | 12 |
| Catadusani, Fasc 1 | 0 | 6 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1–4 @ 2/ each | 8 | 0 |
| Çatapatha Brahmana, Vol I, Fasc 1–7; Vol III, Fasc. 1–4 | 4 | 2 |
| Çatasahasrika prajnaparamita (Text) Part I, Fasc 1–7 @ /6/ each | 2 | 10 |
| *Caturvarga Chintamani (Text) Vols. II, 1–25, III. Part I, Fasc 1–18 Part II, Fasc 1–10 @ /6/ each, Vol IV, Fasc. 1 | 20 | 4 |
| Çlokavartika, (English) Fasc 1–4 | 3 | 0 |
| *Çrauta Sutra of Apastamba, (Text) Fasc 4–17 @ /6/ each | 5 | 4 |
| Ditto Çankhayana, (Text) Vol I, Fasc 1–7; Vol II, Fasc 1–4; Vol III, Fasc 1–4 @ /6/ each; Vol 4, Fasc. 1 | 6 | 0 |
| Çri Bhashyam, (Text) Fasc 1–3 @ /6/ each | 1 | 2 |
| Dan Kriya Kaumudi, Fasc 1 2 | 0 | 12 |
| Gadadhara Paddhati Kālasara, Vol I, Fasc 1–6 | 2 | 4 |
| Kala Madhava, (Text) Fasc 1–4 @ /6/ each | 1 | 8 |
| Kala Viveka, Fasc 1–6 | 2 | 4 |
| Katantra, (Text) Fasc 1–6 @ /12/ each | 4 | 8 |
| Katha Sarit Sagara, (English) Fasc 1–14 @ /12/ each | 10 | 8 |
| Kurma Purana, (Text) Fasc 1–9 @ /6/ each | 3 | 6 |
| Lalita Vistara, (English) Fasc 1–3 @ /12/ each | 2 | 4 |
| Madana Parijata, (Text) Fasc 1–11 @ /6/ each | 4 | 2 |
| Mahā bhaṣya pradipōdyōta, (Text) Fasc 1–9 & Vol II, Fasc 1–11 @ /6/ each | 7 | 8 |
| Manutika Sangraha, (Text) Fasc 1–3 @ /6/ each | 1 | 2 |
| Markandaya Purana, (English) Fasc 1–8 @ /12 each | 6 | 0 |
| *Mimamsa Darçana, (Text) Fasc 7–19 @ /6/ each | 4 | 14 |
| Nyayavartika (Text) Fasc 1–6 @ /6 | 2 | 4 |
| *Nirukta (Text) Vol. III Fasc 1 6, Vol IV, Fasc. 1–8 @ /6/ each | 5 | 4 |
| Nityacarapaddhati Fasc 1–7 (Text) @ /6/ | 2 | 10 |
| Nityacarapradipa Fasc 1–4 | 1 | 8 |
| Nyayabindutika, (Text) | 0 | 10 |
| Nyaya Kusumañjali Prakarana Text Vol I, Fasc 1–6 Vol. II, Fasc 1–3 @ /6/ each | 3 | 6 |

सिद्धे प्रथमे इति । (कै)

तिबादिसूत्रेण पक्षे सिद्धे इति भावः ॥

प्रथम एव भवतीति । (कै)

नियमान्तरस्यासम्भवादित्यर्थः ॥

पाक्षिकौ प्राप्ताविति । (कै)

नन्वेवमेतन्नियमापेक्षया पुरुषनियमस्य परिसङ्ख्यात्वेन गुरुतयोप-

---

यदि पुरुषनियमः शेषग्रहणं कर्तव्यं शेषे प्रथम इति । किं कारणम् । मध्यमोत्तमौ नियतौ युष्मदस्मदोः अनियते तत्र प्रथमोऽपि प्राप्नोति । तत्र शेषग्रहणं कर्तव्यं प्रथमनियमार्थम् । शेष एव प्रथमो भवति नान्यत्रेति । अथाप्युपपदनियम एवमपि शेषग्रहणं कर्तव्यं शेषे प्रथम

---

ननु प्रत्ययस्य प्राधान्यात्तन्नियम एव युक्तः । नैष दोषः । समुदायस्य संचिकीर्षितत्वात् प्राधान्यं तदङ्गत्वात्तु प्रत्ययोपपदयोर्द्वयोरप्यप्राधान्य-मित्युभयोरपि नियम आश्रयते । युष्मदि मध्यम एवेति । तुल्यजातीय-व्यावृत्तेर्नियमफलत्वादुत्तमप्रथमौ निवार्येते न लकारः । लकारविधि-

---

इह युष्मदि मध्यमोऽस्मद्युत्तम इत्येवास्तु युष्मद्यस्मदि त्रयो लकारा इत्यर्थे सर्वेषामङ्गस्यात् । तथा तु न कृतमित्येव । पचतं त्वं भवति त्वद्भवतीत्यत्र तु न ।

---

नियम उपपदनियमो वा स्यात् युष्मदि मध्यम एव अस्मद्युत्तम एव शेषे प्रथम एवेति, पुरुषनियमो वा युष्मद्येव मध्यमोऽस्मद्येवोत्तमः शेष एव प्रथम इति, तत्राद्ये पक्षे कुर्वंस्त्वं कुर्वाणस्त्वमिति युष्मदि शतृशानचौ च न स्यातां तृजादयश्च न स्युः कर्ता त्वं कारकस्त्वमिति । नैष दोषः । एतावान्

---

त्वं चाहं च पचसि पचामि चेति, सहविवक्षायां तु द्वयोरपि प्रत्ययोरेको

---

ऽन्य उच्यत इति' । अन्यो विषय इत्यर्थः । यत्र युष्मदस्मदी समानाधिकरणे न

पदनियम एवोचित इति चेन्न। अनुवादत्वस्यैवकारार्थगर्भत्वस्य प्राप्तबाधकत्वस्य चोभयत्राप्यविशिष्टत्वेन तयोः समत्वमेवेत्याशयात्॥ नन्वत्र युष्मदस्मदोः सत्त्वात्कथं शेषत्वमत आह

यत्र केवले इति। (कै)

असहाये इत्यर्थः॥ सिद्धं तिङ्युक्तिर्न सिद्धान्तिनो वचनारम्भस्याप्यत्रापि सत्त्वादत आह

---

इति। युष्मदस्मदी नियते मध्यमोत्तमौ अनियतौ तौ शेषेऽपि प्राप्नुतः। तत्र शेषग्रहणं कर्तव्यम्। शेषनियमार्थम्। शेषे प्रथम एव भवति नान्य इति। उपपदनियमे शेषग्रहणं शक्यमकर्तुम्। कथम्। युष्मदस्मदी नियते मध्यमोत्तमावनियतौ तौ शेषेऽपि प्राप्नुतः। ततो वक्ष्यामि प्रथमो

---

सामर्थ्याद्वा नास्ति तेषां निवारणम् यत्र प्रथमस्येति। युष्मदि मध्यम एव अस्मदि उत्तम एवेति युष्मदस्मदोर्नियतत्वात् तयोः पुरुषान्तरं न भवति मध्यमोत्तमयोस्त्वनियतत्वात् शेषेऽपि तत्प्रसङ्गे प्रथम इति सूत्रमारभ्यमाणं सिद्धे प्रथमे मध्यमोत्तमयोर्निवारणाय नियमार्थं संपद्यते

---

मध्यमविकृतेरकार्यत्वात्। प्रकृतिरेव हि विकारस्यापत्तौ कार्यौ। तथा च मन्त्रः। यदग्ने स्यामहं त्वं त्वं वाधास्या अहमिति। अहं त्वं स्याम्। त्वं वा

---

विषयो युष्मदस्मदुपपदं शेषस्य सर्वस्यासौ पुरुषेषु नियतः, उच्यन्ते च लडादयस्ते वचनाद्भविष्यन्ति, तुल्यजातीयस्य च नियमेन व्यावृत्तिः, युष्मदि मध्यम एव न प्रथमोत्तमौ अस्मद्युत्तम एव न प्रथममध्यमौ शेषे प्रथम एव न मध्यमोत्तमाविति, एवं तर्हि तिबादिसूत्रे विधीयमानत्वात् प्राधान्यात्तेषा-

---

मकार उत्पद्यते तत्र युष्मदि मध्यमोऽस्मद्युत्तमो विप्रतिषेधेन, त्वं चाहं

---

चात्र शेष इत्यनेन युष्मदस्मदोरभावः शेषो न पुनरन्यसद्भाव इति दर्शयति

स एवासाविति ॥ (कै)

पूर्वस्य वचनस्य ग्रहणात् एव लाघवाश्रयेण सिद्धं लित्याश्चेत्यर्थः ॥ ननु युष्मदस्मदोर्भेदयुक्तेऽपि यत्र केवले ते तत्रैव निषेधः स्यादत आह

यत्र शेषे इति ॥ (कै)

शेषग्रहणं तत्रानुवर्त्तेत इति भावः ॥

---

भवतीति । तन्नियमार्थं भविष्यति । यत्र प्रथमश्चान्यश्च प्राप्नोति तत्र प्रथम एव भवतीति। तत्र युष्मदस्मदन्येषु प्रथमप्रतिषेधः शेषत्वात् । वा । तत्र युष्मदस्मदन्येषु प्रथमस्य प्रतिषेधो वक्तव्यः । त्वं च देवदत्तश्च पचथः । अहं च देवदत्तश्च पचावः । किं कारणम् । शेषत्वात् । शेषे

---

प्रथम एव भवति न मध्यमोत्तमाविति । यथा समे देशे यजेतेति पाक्षिकी प्राप्तो नियमः । तत्रेति । भा । उभयथा नियमे इत्यर्थः । शेषत्वादिति । भा । यत्र केवले युष्मदस्मदी उपपदे स एवाशेषस्तत्र माभूत् प्रथमः । यत्र त्वन्यसहिते ते तत्र समुदायस्य युष्मदस्मद्-

---

र्थं स्यादिति प्रकृत्याश्रय एवेह पुरुषः । स्यादेतत् । भवान् करोतीत्यत्रापि स्थानिन्यपीति मध्यमः स्यात् । अत आह । अलिङ्गः सम्बोधनैकविषयस्य

---

मेव नियमो युक्तः शेषग्रहणाच्चोपपदनियमे हि युष्मदस्मदी नियते पुरुषाश्चानियताः शेषस्यानियतत्वः तत्र प्रथम इत्येतावदुच्यमानं नियमार्थं विज्ञायते तत्र च नियमान्तरस्यासंभवात् प्रथम एवेति नियमः, यत्र च प्रथमाप्रथम-प्रसङ्गस्तत्रैवं विधो नियमः कर्त्तव्यः शेष एव च तथा प्रसङ्ग इति तत्रैव

---

च पचाव, अहं च त्वं च वृत्रहन् संयुज्यावेति । यदपि त्यदादीनां यदन्तर

---

किं सिद्धं भवति त्वं च देवदत्तश्च पचथ, अहं च देवदत्तश्च पचाव, त्वं चाहं

चोदक इति। (कै)

तृतीय इत्यर्थः॥

आरोप्यत इति। (कै)

तं विना वाक्यच्छब्दात्तद्बोधसम्भव इति भावः॥

तदा पृथगिति। (कै)

संबोध्यत्वेनाबोधादित्यर्थः॥

---

प्रथम इति प्रथमः प्राप्नोति॥ सिद्धं तु युष्मदस्मदोः प्रतिषेधात्। वा। सिद्धमेतत्। कथम्। युष्मदस्मदोः प्रतिषेधात्। शेषे प्रथमः युष्मदस्मदोर्नेति वक्तव्यम्॥ युष्मदि मध्यमादस्मद्युत्तमो विप्रतिषेधेन। वा। युष्मदि मध्यमादस्मद्युत्तम इत्येतद्भवति विप्रतिषेधेन। युष्मदि मध्यम इत्यस्या-

---

प्रद्वयोगाप्रद्वयाच्छेषत्वमेवेति प्रथमप्रतिषेधो वक्तव्यः। स एवाह। सिद्धं त्विति। भा। यत्र शेषे युष्मदस्मदी स्तस्तत्र शेषे प्रथमो नेति वक्तव्य-मित्यर्थः। चोदक आह। स तर्हीति। भा। आचार्यदेशीय आह। न वक्तव्य इति। भा। अस्मदः शेष इति। भा। आवां पचाव इति।

---

युष्मदर्थः। सलिङ्ग संबोध्यासम्बोध्यसाधारणश्च भवदर्थ इति। न च युष्मदः सम्बोधनैकविषयत्वे तत सम्बोधन एव प्रथमा स्यात्। ततश्च आमन्त्रिता-

---

नियमो भविष्यति किं शेषग्रहणेन, पुरुषनियमे तु मध्यमोत्तमौ नियतौ युष्मदस्मदी वा नियते प्रथमश्च तत्र युष्मदस्मदोरपि प्रथमप्रसङ्गे शेष एव प्रथम इत्येवं प्रथमनियमः कर्तव्यः, न चान्तरेण शेषग्रहणमेवं नियमः शक्यते

---

मित्यस्मदः शेषत्तदापि स्थानिन्यपीति मध्यमप्राप्तौ परत्वादुत्तम एव भवति आवां पचावः॥

---

च देवदत्तश्च पचाम इति। अत्र यद्यपि युष्मदस्मदोरन्यस्य च यः समुदायः

'तदा भेदाभावात् पृथगिति (कै)

पाठे तदारोपादेव युष्मदर्थे भेदकधर्माभावाद् भेदकधर्माप्रतीतेर्हेतोः पृथग्युष्मदर्थाभाव इत्यर्थः ॥

अत्र प्रयोगे इति । (कै)

चशब्देनैव साहित्यस्य द्योतनादेकशेषो नेत्यर्थः ॥ भाष्ये

---

१ उपलब्धकैयटे एवं पाठोऽस्ति ।

---

वकाशः । त्वं पचसि । अस्मद्युत्तम इत्यस्यावकाशः । अहं पचामि इहोभयं प्राप्नोति । त्वं चाहं च पचावः । अस्मद्युत्तम इत्येतद्भवति विप्रतिषेधेन स तर्हि विप्रतिषेधो वक्तव्यः । न वक्तव्यः । त्यदादीनां यद्यत्परं तच्छिष्यत इत्येवमस्मदः शेषो भविष्यति । तत्रास्मद्युत्तम इत्येव सिद्धम् । अनेकशेषभावार्थं तु । वा । अनेकशेषभावार्थं तु स विप्रतिषेधो वक्तव्यः

---

तत्रास्मद्युत्तम इति । भा । ननु प्रियमाणस्यास्मदो हर्यत्वादप्रयुज्यमानेऽपि युष्मदि तदर्थगतौ मध्यमविधानात् तस्याप्यत्र प्रसङ्ग इति विप्रतिषेध एवाश्रयितव्यः । अत्राहुः । युष्मदर्थे साहचर्यादस्मद्रूपस्समारोप्यते तदा भेदाभावात् पृथग्युष्मदर्थाभावादस्मदुपपदनिमित्त सिद्ध उत्तम एवेत्यदोषः । चोदकस्त्वाह । अनेकशेषभावार्थं त्विति । भा । त्वं

---

त्युदात्तत्वं पदात्परत्वेन निघातश्च स्यादिति वाच्यम् । सम्बोधनस्य प्रातिप-

---

कर्तुमिति कर्तृत्वमेव शेषग्रहणम्, अतः शेषग्रहणं सूत्रकारस्यापि पुरुषनियम एवाभिप्रेत इति तमेवाश्रयति । 'तेषामयं पुरुषनियमः क्रियत इति' । तेषामित्युद्भूतावयवभेदस्तिबादिसमुदाय उच्यते, पुरुषापेक्षया अवयवषष्ठी तेषां तिबादीनामवयवो यो मध्यमपुरुषस्तस्योपपदनियमः क्रियत इत्यर्थः,

---

स युष्मदस्मद्ग्रामन्यत्रापि युष्मदस्मदी वाचक्त इति तत्सद्भावनिमित्तो मध्य-

## यदा न सह विवक्षा (भा)

इत्यस्य च विना केवलपदैर्यदा न साहित्यबोध इत्यर्थः ॥

## तदधिकरणयोरिति (कै)

बहुव्रीहिः ॥ भाष्ये

## तदधिकरणानामिति (भा)

बहुवचनं त्वनेकयुष्मच्छब्दप्रयोगाभिप्रायेण ॥

---

यदा चैकशेषो न। कदा चैकशेषो न। सहविवक्षायामेकशेषः। यदा न सहविवक्षा तदैकशेषो नास्ति। न वा युष्मदस्मदोरनेकशेषभावात्तदधिकरणानामप्यनेकशेषभावादविप्रतिषेधः । वा । न वार्थो विप्रतिषेधेन। किं कारणम्। युष्मदस्मदोरनेकशेषभावात्तदधिकरणानामपि युष्मदस्मद-

---

चाहं च पचाव इत्यत्र प्रयोगे। आचार्यदेशीय आह। नवेति। भा। सहविवक्षाया अभावे यथा युष्मदस्मदोरेकशेषाभावः। एवं तदधिकरणयोरपि क्रिययोर्भेदस्य विवक्षितत्वादाख्यातयोरप्येकशेषाभावे पचसि पचामि चेति पृथगेव प्रयोगान्नार्थो विप्रतिषेधेनेत्यर्थः। एतदेव समर्थ-

---

दिकार्य एवान्तर्भावात्। सम्बोधनेचेति सूत्रं हि सम्बोधनाधिकार्यमिति वक्ष्यते। यत्तु केचिदिष्टापत्तिं कुर्वाणाः पठन्ति।

---

सापेक्षस्यापि पुरुषशब्दस्य गमकत्वात् समासः, अथवा तेषामिति कर्मणि षष्ठी पुरुषद्वारको नियमः पुरुषनियमः, पुरुषद्वारेण ते नियम्यन्त इत्यर्थः। उपोच्चरितं पदमुपपदम्, शाकपार्थिवादित्वादुत्तरपदलोपी समासः, उपशब्दः सामीप्ये ततश्च व्यवहिते न भवितव्यमिति शङ्कामपनयति। 'अथ-

---

मोत्तमौ भवतः। न तु तदभावनिमित्तः प्रथमः, अन्यसद्भावे तु निमित्ते स्यादेव प्रथमः। यदाह तत्र युष्मदन्येषु प्रथमप्रतिषेधः। शेषत्वादिति ॥

## न तु सहविवक्षेति । (कै)

न तन्निबन्धन एकशेष इति भाव ॥

## एवं द्रव्येति । (कै)

क्रियापृथक्त्वोपक्रमे वाक्ये यथा द्रव्यपृथक्त्वमेव द्रव्यपृथक्त्वोपक्रमे क्रियापृथक्त्वमेवेत्यर्थ । न त्वित्यस्य वाचनिक एकशेष इत्यत्रान्वय ॥ तदेव वचनमाह

---

धिकरणानामपि एकशेषेण न भवितव्यम् । त्वं चाहं च पचसि पचामि चेति । क्रियापृथक्त्वे च द्रव्यपृथक्त्वदर्शनमनुमानमुत्तरत्रानेकशेषभावस्य । वा । क्रियापृथक्त्वे च द्रव्यपृथक्त्वं दृश्यते । तद्यथा । पचति च पचामि च त्वं चाहं चेति । तदनुमानमुत्तरयोरपि क्रिययोरेकशेषो न भवतीति । एवं च कृत्वा सोऽप्यदोषो भवति यदुक्तं तत्र युष्मदस्मदन्येषु प्रतिषेध

---

यितुमाह । क्रियापृथक्त्व इति । भा । यथा क्रियापृथक्त्वे सति द्रव्यपृथक्त्वं न तु सहविवक्षा एवं द्रव्यपृथक्त्वेऽपि क्रियापृथक्त्वेन भाव्यं परस्परसाह-चर्याव्यभिचारात् । एवं च कृत्वेति । भा । द्रव्यपृथक्त्वे सति क्रियापृथक्त्वा दित्यर्थं । इदानीमाचार्यं आह । मध्यमावदिति । भा । एकशेष इति । भा । एकशेषफलत्वादेकशेष इत्युच्यते । न तु प्रथममध्यमोत्तमानामेक-

---

सम्बोधनार्थं सर्वत्र मध्यमे केचिदिच्छते ।
तथा सम्बोधने सर्वां प्रथमां युष्मदो विदु ।

---

हिते चेति' । समीप इत्येव सिद्धे उपपदग्रहणादापेक्षिकस्यापि सामीप्यस्य ग्रहणं व्यवहितमपि च व्यवहिततरापेक्षया सन्निकृष्टमिति भाव । उपपद-ग्रहणं तु पूर्वभूतेऽपि युष्मदि यथा स्यात् अन्यथा 'तस्मिन्निति निर्दिष्टे पूर्वस्ये' ति परभूते एव स्यात् । ननु यथा स्थानिन्यपीति वचनात् सर्वथा

प्रथमेत्यादि । (कै)

इदं[1] "सरूप" सूत्रे वार्त्तिकम् ॥ वाचनिकैकशेषे दूषणमाह

एवं हीति । (कै)

विप्रतिषेधस्थापनाय चैतद्भाष्यप्रवृत्तिरिति भावः ॥ अथ भाष्याशयमाह

तस्मादिति ॥ (कै)

---

१ अ १ । पा २ । सू ६४ ।

---

शेषत्वादिति । तत्रापि च्चैवं भवितव्यम् । त्वं च देवदत्तश्च पचसि च पचति च । अहं च देवदत्तश्च पचामि च पचति चेति ॥ यत्तावदुच्यते न वा युष्मदस्मदोरनेकशेषभावात्तदधिकरणानामप्यनेकशेषभावादविप्रतिषेध इति । दृश्यते हि युष्मदस्मदोश्चानेकशेषस्तदधिकरणानां चैकशेषः । तद्यथा । त्वं चाहं च वृत्रहन्नुभौ संप्रयुज्यावहा इति । यदप्युच्यते

---

शेषो सरूपत्वादिति वाचनिक एकशेषः । एवं चैकशेषे चाश्रीयमाणे-नार्थो विप्रतिषेधेन । तस्मात्कारकभेदेऽपि क्रियाया अभेदादेक एव धातुः प्रयुज्यते तस्माच्च परो लकार एवानेकार्थाभिधायी विरोधाभावात् तत्र पुरुषद्वयप्रसङ्गे युक्तो विप्रतिषेध । अन्ना इति । भा । प्रकटात्तवि-

---

युष्मदर्थस्य सिद्धत्वान्नियता चाद्युदात्तता ।
युष्मदः प्रथमान्तस्य परत्वेन पदादसाविति ॥

---

ऽप्रयुज्यमानेऽपि भवति तथा पूर्वप्रयोगे ऽपि परभूतस्याप्रयोगात् स्थानि-नीति भविष्यति । नैतदस्ति । सप्तमीनिर्देशात् प्रयोगपक्षे परभूत एव स्यात् । 'समानाभिधेय इति' । अधिकरणशब्दोऽभिधेयवचन इति दर्शयति । पुनः समानाभिधेये लकारेण नियम्यमानेन वा पुरुषेण, त्रिविधं चाभिधेयं

लकार एवानेकार्थाभिधायीति । (कै)

क्रियायामनेकार्थगतारोपितसङ्ख्याभिधायीत्यर्थः ॥ नन्वचा इति भज्यन्तामिति च बहुवचन कथमत आह

शकटास्त्वेति ॥ (कै)

तत्रैकैकाचस्यैकैकक्रियायामन्वयेन सहविवक्षा कथमित्याशङ्क्य तामुपपादयति

---

क्रियापृथक्त्वे च द्रव्यपृथक्त्वदर्शनमनुमानमुत्तरत्रानेकशेषभावस्येति । क्रियापृथक्त्वे खल्वपि द्रव्यैकशेषो भवतीति दृश्यते । तद्यथा । अक्षा भज्यन्तां भक्ष्यन्तां दीव्यन्तामिति । एवं च कृत्वा सोऽपि दोषो भवति । यदुक्तं तत्र युष्मदस्मदन्येषु प्रतिषेध शेषत्वादिति । नैष दोष । परिहृतमेतत् । सिद्धं तु युष्मदस्मदो प्रतिषेधादिति । स तर्हि प्रतिषेधो वक्तव्य ।

---

भौतकाचदेवनाद्यात्मा सहविवक्षायामेकशेषस्तत्वावयवक्रियाया समुदाये आरोपाद्भज्यन्तामित्यादि बहुवचनं सामानाधिकरण्यं चोपपद्यते । यथा द्रव्यैकशेषेऽपि क्रियापृथक्त्वमेवं द्रव्यपृथक्त्वमेव द्रव्यपृथक्त्वेऽपि क्रियैकशेष इत्यर्थ । नहि शेषस्यान्यस्येति । भा । उभयुक्तादन्य शेषः । युष्मदस्मदोश्चोभयुक्तयोः सङ्घावान्नास्ति शेषत्वम् । इतर एतत्सामर्थ्यमविदित्वाऽऽह ।

---

तत्र । उक्तन्यायविरोधात् । लक्ष्यविरोधाच्च । दृश्यते हि पादादावयन्तोदात्तत्वं पदात्परत्वेऽप्यनिघातश्च । तद्यथा, युवं ह गर्भञ्जगतीषु धत्थ । यूयं पातस्वस्तिभि । इ ये देवा यूयमिदापय स्थेति ॥

---

लकाराणां भाव कर्म कर्ता च, तत्र द्रव्यवाचिनोर्युष्मदस्मदोर्भाववाचिना लान्तेन सामानाधिकरण्यासम्भवात् कर्तृकर्मणोरेव ग्रहणमित्याह । 'तुल्यकारक इति' । तुल्यमेक कारक यस्य तत्तयोक्त, स्थानिन्यपीति स्थानशब्द

तत्रेति । (भा)

एकैकावश्यैवैकैकक्रिया विवक्षितेत्यभिमानः । वस्तुतः सह-विवक्षाभावेऽपि लोकन्यायसिद्धं विद्यमानमेवेतिवत् तन्त्रं बहुवचनान्तानामत्रापीति भाष्याशयः । एकशेषशब्देन च तन्त्रमेव लक्ष्यत इत्याहुः ॥ भाष्ये

सोऽपि दोष इति । (भा)

विप्रतिषेधाङ्गीकाररूपो यो दोषस्तेनोक्तस्तदङ्गीकारे तदुक्तो द्वितीयो दोषोऽपि लग्न इत्यर्थः ॥

---

न वक्तव्यः । शेषे प्रथमो विधीयते । नहि शेषस्थान्यस्य शेषग्रहणेन गृह्यते । भवेत्प्रथमो न स्यात् । मध्यमोत्तमावपि न प्राप्नुतः । किं कारणम् । युष्मदस्मदोरुपपदयोर्मध्यमोत्तमावुच्येते । न च युष्मदस्मदी चान्यच युष्मदस्मद्ग्रहणेन गृह्यते । यदत्र युष्मद् यचास्मत्तदाश्रयौ मध्यमोत्तमौ भविष्यतः । यद्येव तर्हि यदत्र युष्मद्यचास्मत् तदाश्रयौ

---

भवेदिति । भा । इतर आह । यदत्रेति । भा । तत्सन्निधौ शेषत्वाभावात्तन्निबन्धनमेव कार्यं भवतीत्यर्थः । इतर शेषपदार्थमविदानाह । यद्येवेति । भा । एतद्विचारणीयमप्युपेक्ष्योभयपदार्थं वर्णयितुमाह । एवं तर्हीति । भा । यत्रावेति । भा । युष्मदस्मदो अवयवास्तदभावे च शेषसद्भावात् यत्र शेष इति । देवदत्तश्चेति । न तदिति । नहि तस्यैव साधनत्

---

प्रसङ्गवाची स्थानमस्यास्तीति स्थानी तत्र च प्रयुज्यमानस्याप्रयुज्यमानस्य च प्रसङ्गोऽस्ति तथात्वे चेदं स्थानमस्यास्तीति, तस्य सामर्थ्यादवधारणं विज्ञायते प्रसङ्ग एव यस्य न तु प्रयोग इति । यद्वा स्वनिकायप्रसिद्धिरेषा यस्य स्थाने आदेशो विधीयते स स्थानीति इह त्वप्रयुज्यमानता सादृश्यात् युष्मदि

परिहृतमेतदिति । (भा)

शब्दितैवेति शेष' ॥

उपयुक्तादन्य इति । (कै)

अस्योपयुक्तासमभिव्याहृत इत्यादि' । शेषपदस्य तत्रैवार्थे शक्तिरिति भाव' । एतत्सामर्थ्यं शब्दशक्तिम् । तेनावधारणमाश्रितमिति भ्रमस्तस्येति भाव' ॥ भाष्ये

यदत्र युष्मदिति (भा)

समुदायस्य युष्मत्वाभावेऽपि तदवयवयुष्मदमादाय मध्यम इत्यर्थः ॥

---

मध्यमोत्तमौ भवत । एव योऽत्र शेषस्तदाश्रय *प्रथमो भविष्यति । एवं तर्हि शेष उपपदे प्रथमो विधीयते । उपोचारि पदमुपपदम् । यच्चात्रोपोचारि न स शेषः यस्य शेष न तदुपोचारि । भवेत् प्रथमो न स्यान्मध्यमोत्तमावपि न प्राप्नुत । किं कारणम् युष्मदस्मदोरुपपदयोर्मध्यमोत्तमावुच्येते । उपोचारि पदमुपपदम् । यच्चात्रोपोचारि न ते

---

किं तर्हि युष्मदस्मदर्थयोरपि । नचात्र शेषेणैवेति । किं तर्हि युष्मदस्मदर्थेनापि तद्भावाच्च शेषत्वाभाव इत्यर्थ । एवं तर्हीति । यद्यप्यनेकशेषे दोष उपक्रान्तस्तथाप्येकशेषेऽपि दूषणार्थोऽयमुपक्रम' । स्थानिन्यपीति । भा । अप्रयुज्यमाने प्रयुज्यमाने च शेषे । प्रथमविधानात् । दोषान्तरमप्याह । त्यदादीनामिति । एतदपरिहार्यं मन्यमानो लब्धेच्छोन्यदप्याह ।

---

प्रयुज्यते, सर्वथा स्थानिन्यपीत्यस्याप्रयुज्यमानेऽपीत्यर्थ, अपिशब्दात्प्रयुज्यमानेऽपि तदाह । 'स्थानिन्यपीत्यादिना' । स्थानिन्यपीति कोऽर्थ प्रयुज्यमानेऽप्यप्रयुज्यमानेऽपीत्यर्थ । उपपदग्रहणप्राप्तस्य चार्थस्यापिशब्दोऽनुवाद । समानाधिकरण इति किं, त्वया गम्यत इत्यत्र मा भूत् । क्वचित्तु वृत्तविचार्यं

---

* "प्रथम प्राप्नोति' इति पाठोऽस्ति पुण्यपत्तनस्थभाष्यपुस्तके ॥

( युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि (अ १। पा ४। आ. ४)
मध्यमः। अस्मद्युत्तम। शेषे प्रथमः। १। ४। १०५, ७, ८। )

## एतद्विवरणीयमपीति। (कै)

एतत् शेषपद्ग्रहणं विपरीत योग्यमपीत्यर्थः॥

## उपेक्षेति। (कै)

स्फुटत्वादिति भाव॥

## उपपदार्थमिति। (कै)

उपपदानि तद्विशेषणान्युपपदसमानाधिकरणपदस्थानि पदानि तदर्थमित्यर्थ॥ सूत्रावकाशं दर्शयति।

## तदभावे चेति॥ (कै)

---

युष्मदस्मदी। ये च युष्मदस्मदी न तदुपोच्चारि। एव तर्हि शेषेणैव सामानाधिकरण्ये प्रथमो विधीयते। न चात्र शेषेणैव सामानाधिकरण्यम्। भवेत्प्रथमो न स्यान्मध्यमोत्तमावपि तु न प्राप्नुत। किं कारणम्। युष्मदस्मद्भ्यां सामानाधिकरण्ये मध्यमोत्तमावुच्येते। न चात्र युष्मदस्मद्भ्यामेव सामानाधिकरण्यम्। एव तर्हि त्यादादीनि सर्वैर्नित्यमि (१।२।

---

युष्मदीति। परमत्वमिति। युष्मदस्मदीति विभिक्तरूपपरिग्रहादस्य च शब्दान्तरत्वात्। आचार्यदेशीय आह। तदन्तविधिनेति। युष्मदस्मदोरुपपदस्य विशेषणत्वात्तदन्तविधि। चोदको दोषमाह। इहापीति। अतित्वमिति। त्वामतिक्रान्त इति समास। एव तदन्तविधावतिव्याप्तिमुक्त्वा अव्याप्तिमाह। ये चाप्येते इति। त्वत्कल्प इति। ईषदसमाप्तस्य

---

यस्य पच्यते, इह च अतित्व पचति अत्यह पचतीत्यत्रातिक्रान्तप्रधाने समासे युष्मदस्मदोरसामानाधिकरण्यात् प्रथम एव भवति, इह त्वीषदसमाप्तस्त्वं त्वत्कल्प पचसि मत्कल्प पचामीति अत्रान्तरङ्गत्वाद्युष्मदस्मदर्थे एव त्वत्कल्पमत्कल्पशब्दाभ्यामुच्यत इति मध्यमोत्तमौ भवत, तत्सदृशपदार्थान्तराभिधाने तु प्रथम, तथा त्वत्तर पचसि मत्तर पचामि

## न हि तस्यैवेति । (कै)

"न तद्" इतिभाष्यस्य न तदेवेत्यर्थ इति भावः ॥ अनेन न पारिभाषिकमुपपदं किं तु यौगिकमिति निर्णीतम् ॥ नन्वनेकशेषे दोषे प्रक्रान्ते कथमेकशेषेणान्यथासिद्धिरुक्तेत्यत आह

## यद्यपीति । (कै)

एवं चैकशेषे तयोरेवावस्थानान्नास्त्यत्र शेष इति न प्रथम इति भावः ॥ एकशेषेऽपि दोषमाह भाष्ये

---

७२) त्वेवमत्र युष्मदस्मदोः शेषो भविष्यति । तत्र युष्मदि मध्यमः अस्मद्युत्तम इत्येव सिद्धम् । न सिध्यति । स्थानिन्यपीति प्रथमः प्राप्नोति । त्यदादीनां खल्वपि यद्यत्परं तच्छिष्यते इति यदा भवत् शेषस्तदाश्रयः प्रथमः प्राप्नोति युष्मदि मध्यमः अस्मद्युत्तम इत्येवोच्यते तावित्थं न प्राप्नुत । परमत्वं पचसि परमाहं पचामीति । तदन्तविधिना (१ । १ । ७२)

---

त्वत्कल्प इति कालान्तरप्रसिद्धगुणरहितो युष्मदर्थ एव त्वत्कल्पशब्देनोच्यते । न तु तत्सदृशं पदार्थान्तरम् । तदभिधाने युष्मदर्थस्य साधनत्वाभावाद् मध्यमाभावात् । एवं मत्कल्प इति बोद्धव्यम् । आचार्यदेशीय आह । एवं तर्हीति । सौत्रत्वान्निर्देशस्य मतुब्लोपोऽभिधास्यते इति भाव । चोदक आह । इहापीति । आचार्य आह । एवं तर्हीति ।

---

परमत्व पचसि परमाहं पचामीति, कालान्तरादृष्टगुणातिशयविशिष्टो युष्मदस्मदर्थ एवोच्यते इति भवत्येव । एवं च युष्मदर्थे मध्यमः,अस्मदर्थे उत्तम इतीयता सिद्धं युष्मदस्मदर्थे चेल्लकार उत्पन्नस्तर्ह्येव मध्यमोत्तमाविषयं, तथा तु न कृतमित्येव, इह पाल त्वं संपद्यत इति त्वद्भवतीति भवति प्रकृतेरेव विकाररूपेण सम्पत्तौ कर्तृत्वादेतचान्महत इत्यत्रोपपादयिष्याम, तदा

**न सिध्यति स्थानिन्यपीति ॥ (भा)**

तद् व्याचष्टे

**अप्रयुज्यमाने इति । (कै)**

अनेन कैयटेन स्थानिपदार्थो निर्णीतः ॥ अतिशयितस्त्वमिति विग्रहे इष्टापत्तिरत आह

**त्वामतीति । (कै)**

यत्र लान्तस्येत्यन्तपद इत्येति केचित् ॥

**शेषत्वाभाव इति । (कै)**

---

भविष्यति । इहापि तर्हि तदन्तविधिना प्राप्नुत । अतित्वं पचति अत्यहं पचतीति । ये चाप्येते सामानाधिकरण्यवृत्तयस्तद्धितास्तत्र मध्यमोत्तमौ न प्राप्नुत त्वत्तरः पचसि मत्तरः पचामीति । त्वद्रूपः पचसि मद्रूपः पचामि त्वत्कल्पः पचसि मत्कल्पः पचामीति । एवं तर्हि युष्मद्यस्मदतीत्येवं

---

सामानाधिकरण्ये इति वचनाद्युष्मदस्मदर्थेन यत्र लान्तस्य सामानाधिकरण्यं तत्र मध्यमोत्तमाभ्यां भवितव्यमिति नास्ति कश्चिद्दोषः । एवं च छलेति । युष्मदस्मदर्थस्य साधनत्वाच्छेषत्वाभावः । अथवेति । प्रथम इत्येतावत्सूत्रं क्रियते अनाश्रितविषयविशेषः प्रथमो विधीयमान उत्सर्गो भवति । तस्य विषयविशेषे विधीयमानौ मध्यमोत्तमावपवादौ भवतः ।

---

च मन्त्रे, 'यदग्ने स्यामहं त्वं त्वं वास्या अहं मि'ति, अहं त्वं स्याः त्वं वाहं स्या इति प्रकृत्याश्रय पुरुषो दृश्यते, इह भवान्पचत्विति युष्मदर्थप्रतीतेः स्थानिन्यपीति मध्यमः प्राप्नोति, न वा युष्मदर्थत्वात्, अलिङ्गः सम्बोधनविषयश्च युष्मदर्थः भवदर्थस्तु लिङ्गवान् न च सम्बोधनैकविषयः यद्येव हि

उपयुक्तासमभिव्याहृत उपयुक्तादन्यः शेषपदेनोच्यत इति भावः ॥

एवं तर्हि युष्मदि साधने (भा)

इत्यनेन समानाधिकरण इत्यस्यार्थो निर्णीतः ॥

साधने (भा)

इत्यस्य लकारवाच्यसाधने क्रियया समानाधिकरणे इत्यर्थः ॥ एतदर्थमेवान्तपदमित्यन्ये ।

अनाश्रितेति । (कै)

---

भविष्यति । इहापि तर्हि प्राप्नुत अतित्वं पचसि अत्यहं पचतीति । एवं तर्हि युष्मदि साधने अस्मदि साधन इत्येव भविष्यति । एवं च कृत्वा सोऽप्यदोषो भवति यदुक्तं तत्र युष्मदस्मदन्येषु प्रतिषेध शेषत्वादिति । अथ वा प्रथम उत्सर्गः करिष्यते तस्य युष्मदस्मदोरुपपदयोर्मध्यमोत्तमावपवादौ भविष्यतः । तत्र युष्मद्वन्यस्यास्मद्वन्यस्यास्तीति कृत्वा मध्यमो-

---

त्तमापवादनिमित्तसद्भावाद्यामिश्रेऽपि विषये मध्यमोत्तमावेव भविष्यतः न तु प्रथम इत्यर्थः । अर्थं तमिति । प्रकृतिविकृत्योरभेदविवक्षया अप्रत्यय । तत्र किं प्रकृत्यन्वयेन प्रथमेन भाव्यमथ विकृत्यन्वयेन मध्यमेनेति प्रश्न । अत्रोत्तरम् । तद्भवतीति । प्रकृतेरेव विकाररूपेण संपत्तौ कर्तृत्व-

---

मात्त्वरूपाधीतेऽभिमुखीभावो गम्यते एव तस्मिन्नपि, तथा च युष्मद सर्वत्रैव सम्बोधने प्रथमा आमन्त्रितायुदात्तत्व च भवति मद्दात्तस्ते च निघात इति केचिदाहुः । उक्तं च

सम्बोधनार्थं सर्वत्र मध्यमे कैश्चिदिष्यते ।
तथा सम्बोधने सर्वां प्रथमां युष्मदो विदुः ।

तिप्रसिति सिद्धे इदं सूत्रं तदनुवादो विषयविशेषे ऽपवादबोधनायेति भावः। अत एव भावे प्रथमपुरुषसिद्धिरिति बोध्यम्॥

विकाररूपेणेति। (कै)

आरोपितविकाररूपेणेत्यर्थः॥

न सन्निवेश आश्रयणीयः (कै)

इत्यस्य किं तु भवतु युष्मदस्मदितिशेषः॥

---

त्तमौ भविष्यतः। अथेह कथं भवितव्यम्। अलं त्वं संपद्यसे त्वद्भवतिमद्भवतीति॥ आहोस्वित्त्वद्भवसि मद्भवामीति। त्वद्भवति मद्भवतीत्येवं भवितव्यम्। मध्यमोत्तमौ कस्मान्न भवतः। गौणमुख्ययोर्मुख्ये संप्रत्ययो भवति। तद्यथा। गौरनुबन्ध्यो ऽजो ऽग्नीषोमीय इति। न बाहीको

---

मिति भावः। मध्यमोत्तमौ कस्मादिति। यथा प्रकृतिस्तद्धर्मसमाचारायुष्मदस्मद्व्यपदेशं लभते तथा मध्यमोत्तमावपि प्राप्नुतः। गौणमुख्ययोरिति। तद्धर्मसमाचारादारोपितमत्र युष्मदर्थरूपत्वमिति भावः। शिष्टं भाष्यम् "ओदि"त्यत्र व्याख्यातं तत एवावधार्यताम्। यदुक्तं भवतः शेष इति तत्रोत्तरमाहुः। युष्मदस्मद्वत् इत्येवं न संनिवेश आश्रयणीयः। किं तु

---

युष्मदर्थस्य सिद्धत्वान्नियतावाद्युदात्तता।
युष्मदः प्रथमान्तस्य परस्येन्न पदादसौ॥

इति। सत्यं, सम्बोधनैकविषयो युष्मच्छब्दः प्रथमा तु शुद्धैव, अभिमुखीभावस्यापि प्रातिपदिकार्थ एवान्तर्भावात्, यत्र त्वनन्तर्भावः तत्र तदभिद्योतनाय सम्बोधने चेति प्रथमा विधीयते स्वरोऽप्यन्यथा युवं हि स्थःस्वर्पती, यूयं यात स्वस्तिभिः, इमे देवा, यूयमिदाप्यस्थेति पादादावप्य-

(अ. १ । पा. ४ । आ. ४) (युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः । अस्मद्युत्तमः । शेषे प्रथम । १ । ४ । १०५, ७, ८ ।)

## वचनादिति । (कै)

अस्मिन्नर्थे तनविषयो युष्मदर्थो भवदर्थस्तु न तथेति न युष्मदर्थसमानार्थत्वमिति बोध्यम् । यदा भवतः शेषतया भाष्येत्र प्रथम इत्याशयेन भाष्ये तत्रोत्तरानुक्तिरित्यन्ये ॥

---

नुबध्यते । कथं तर्हि बाह्लीके ग्रामे भवतः (७ । ३ । ९० । ६ । ४ । ९०)। गौर्वाहीकस्तिष्ठति ग्रामागच्छेति । अर्थाश्रय एतदेवं भवति । यदि युष्मदाश्रयं युष्मदभावे तद्भवति । युष्मदाश्रये च ग्रामे ।

---

भवतु युष्मदस्मदिति । तत्रचास्मद एव शेषो न तु भवतः । पूर्वशेषसदृशमाचेति वचनात् ।

---

स्तोदाहरणं पदान्तरत्वेऽप्यविघात । तदेवं भवच्छब्दप्रयोगसम्बोधनविषयत्वाल्लिङ्गत्वाभावाद्युष्मदर्थत्वाद् मध्यमो न भवतीति स्थितम् ।

# परः संनिकर्षः संहिता। १। ४। १०९॥

परो वर्णान्तराव्यवहित इत्यर्थे मध्यमादिवृत्तावपि सेत्स्यतीत्यधिमभाष्यमङ्गतिरत आह

पूर्वेति। (कै)

वर्णान्तरव्यवायो ऽव्यवहितपरत्वाभावादेवातिप्रसङ्गविरहः "दिकोयणची" (६।१।७७) त्यादौ संहिताधिकारवैयर्थ्यापत्तेः स नार्थ इति भाव॥ ननु नञ्तत्पुरुषे उत्तरपदार्थप्रधानतया नपुंसकनिर्देशो ऽयुक्तो ऽत आह

---

परः संनिकर्षः संहिता।१।४।१०९॥ परः संनिकर्षः संहिता चेद्दुतायामसंहितम्। वा। परः संनिकर्षः संहिता चेद्दुताया वरौ संहितासंज्ञा न प्राप्नोति। द्रुतायामेव हि परः संनिकर्षो वर्णाना

---

परः सनिकर्षः संहिता। १। ४। १०९। पूर्ववर्णोच्चारणानन्तरमेव यद्वर्णान्तरमुच्चार्यते न तु तच्छून्यःकालसद्भावः स परः उत्कृष्टः संनिकर्षः प्रत्यासत्तिलक्षणः संहितासंज्ञ इति सूत्रार्थः। एवं स्थिते चोद्यते। परः इति। द्रुतायामेव वृत्तावनन्तरोक्तः परः

---

परः संनिकर्षः संहिता १।४।१०९॥ अतिशयित संनिधिर्वर्णाना यः स संहितासंज्ञः स्यात्। संज्ञाप्रदेशाः संहितायामित्यादयः॥

---

"परः संनिकर्षः संहिता"।१।४।१०९॥ 'परशब्दो ऽतिशये वर्तते इति'। यथा परं सुखं परं दुःखमिति, दिगादिषु वर्तमानस्य यश्च

## अव्ययीभावे (कै)

इत्यादि । पूर्वपदार्थप्राधान्ये ऽव्ययीभाव उत्तरपदार्थप्राधान्ये तत्पुरुष इति व्यवस्थितेरिति भावः । वस्तुतः संहिता शब्दोऽपि परमनिकर्षवाची क्लीबस्तेनायं तत्पुरुष एव । अर्मादिनमारोपितं मन्वानं परसन्निकर्षस्तेन तदभावात्संहितासंज्ञा न प्राप्नोतीत्यर्थ । नञाऽव्ययीभावस्तु नास्त्येवेति नञ्सूत्रे वक्ष्यते ॥

## बहुव्रीहिरिति । (कै)

पौर्वापर्यं चान्यपदार्थ इत्यभिमानः । अदावमेव युक्त संहितासंज्ञा न प्राप्नोतीति भाष्यव्याख्यानाद् बहुव्रीहेस्तत्पुरुषस्येवाव्ययीभावस्यापि लघुत्वाच्च योग्यान्यपदार्थाभावाच्च। आद्यस्योत्तरपदपरत्वाभावान्मध्यमस्य पूर्वपदत्वाभावात्सामानाधिकरण्याभावाच्च पुंवत्वाप्राप्तेराह

---

नाद्रुतायाम् ॥ तुल्य सन्निकर्ष । वा। तुल्य सन्निकर्षो वर्णाना द्रुतमध्यमविलम्बितासु वृत्तिषु ॥ किं ह्यतस्तर्हि विशेष । वर्णकालभूयस्त्वं तु। वा। वर्णाना तु कालभूयस्त्वम् । तद्यथा । हस्तिमशकयोस्तुल्य सन्निकर्ष प्राणिभू-

---

सन्निकर्षं संभवति न तु मध्यमाया विलम्बिताया चेत्यर्थ । असंहितमिति । संहितासद्भाया अभाव इत्यर्थाभावेऽव्ययीभाव (२ । १ । ६) । अविद्यमाना वा संहिता अस्मिन्निति बहुव्रीहि । संहिताद्रुतमध्यमविलम्बितास्विति । द्रुता च मध्यमा च विलम्बिता चेति द्वन्द्वे कृते भाष्यकारवचनप्रामाण्याद्ध्रस्व । सर्वासु वृत्तिषु तुल्य

---

न भवति, सन्निकर्षस्य दिग्देशकालायोगात् अर्थान्तरापेक्षमन्यत्वम् व्यभिचारिसन्निकर्ष प्रत्यासत्तिरिति न तु संश्लेषस्तस्य वर्णेष्वसंभवात् संहि

भाष्यकारेति। (कै)

"द्वयचोः संज्ञाछन्दसोर्बहुलमि" (६।१।६२) त्यनेनेति भावः॥

ननु सर्ववृत्तिषु वर्णानामेकरूपत्वात्कथं वर्णकालभूयस्त्वमत आह

वर्णोपलब्धीति॥ (कै)

वैकृत (कै)

आलस्यादिजन्यो ध्वनिः पुनःपुनरुपलब्धिधारा न तु विच्छिद्य विच्छिद्य ग्रहणमिति। एतच्च"तपर" (१।१।७०) सूत्र विस्तरेण निरूपितम्॥

ध्वनिभेदादिति। (कै)

वैकृतध्वनिभेदादित्यर्थः॥ ननु "किं कृत इति" कारणप्रश्ने फलकथनेनोत्तरमसङ्गतमत आह

कारणमेवेति। (कै)

---

यक्तं तु। यदेवं द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं काल-भेदात्। वा। द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कर्तव्यम्। किं कारणम्। कालभेदात्। ये द्रुताया वृत्तौ वर्णास्त्रिभागाधिकास्ते मध्य-

---

सन्निकर्षः नैरन्तर्येणोच्चारणात्। विशेष इति। वृत्तीनामिति शेषः। क्व-चिद्वृत्तिविशेषे इत्येव पाठः। वर्णानां त्विति। वर्णोपलब्धिकालभेदा-द्वर्णकालभूयस्त्वमुच्यते। द्रुतायां स्वल्प उपलब्धिकालः। मध्यमायामधिकः। विलम्बितायामधिकतरः। प्राकृतवैकृतभेदाद्भिन्ना ध्वनयः। तत्र

---

संयोगस्तेद् द्रव्यधर्मत्वान्न शब्दस्य गुणस्य संभवति, समवायस्तेन वर्णे वर्णः समवैति शब्दस्याकाशसमवायित्वात्, येषां तु शब्दो द्रव्यं तेषां न क्वापि

वर्णकालभूयस्त्वं त्विति (भा)

भाष्यस्य कारणं वृत्तिविशेषस्येति शेषः। तच्च वैकृतध्वनिरूपं स्वयमुक्तमिति भावः ॥ हस्तिमशकयोः परस्परमसंनिकर्ष इति नायं इत्याह

हस्तिन इति । (कै)

अत एव "प्राणिभूयस्त्वमि"त्यत्रिमग्रन्थसङ्गतिरिति भावः ॥ प्राणिशब्देनात्र शरीरम् ॥

व्यञ्जकध्वनीति । (कै)

उपलब्धिधाराजनकध्वनीत्यर्थः ॥ भाष्ये

उक्तं वेति । (भा)

वचनारम्भापेक्षो विकल्पः ॥ ननु शब्दानां नित्यत्वादिरामाभावे ऽविराम इति विशेषणं व्यर्थमत आह

---

मायाम् ये मध्यमाया वृत्तौ वर्णास्त्रिभागाधिकास्ते विलम्बितायाम् ॥ उक्तं वा। वा। किमुक्तम्। सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराचिरवचनाद् वृत्तयो विशिष्यन्ते (१।१।७०) इति। अथवा शब्दाविराम-

---

वैकृतध्वनिवशात्तस्यैव वर्णस्य पुनः पुनरुपलब्धिर्भवतीति ध्वनिभेदाद्वृत्तिभेद । किं कृत इति कारणे पृष्टे वर्णकालभूयस्त्वं त्विति सामर्थ्यात्कारणमेवोक्तं भवतीति । हस्तिमशकयोरिति । हस्तिनो हस्तिना यः सन्निकर्षं मशकस्य मशकेन स तुल्यः परस्परापेक्षयेत्यर्थः। प्राणिभूय-

---

शब्दः समवैति अतिशययोऽपि संयोगसमवाययोः कीदृश इति न विद्म, प्रत्यासत्तेस्त्वपेक्षाभेदात् सम्भवति प्रकर्षाप्रकर्षयोग, तस्मात्प्रत्यासत्तिरेव संनिकर्ष । ननु च क्रमेणोच्चार्यमाणेषु वर्णेषु पूर्वस्य वर्णस्य ये निष्पादकाः

यद्वेति। (कै)

शब्देन तदुच्चारणं लक्ष्यत इति भावः॥ नन्वविरामे ऽवसानसंज्ञाप्राप्तिरित्यसंगतमत आह

भिन्नेति। (कै)

ध्वनिपदेनात्र कण्ठताल्वाद्यभिघातः प्रयत्नभेदे एकप्रयत्नाविच्छेदाभावो हेतुः। अविच्छेदाभाव इत्यस्यारोपितविच्छेदप्रतियोगिको ऽभाव इत्यर्थः। तेनाभावप्रतियोगिको ऽभावः कथं तस्य भावप्रतियोगिकत्वनियमादिति न शङ्क्यं विच्छेदश्च निवृत्तिविरामापरपर्यायः क्रियाविशेष इति बोध्यम्॥

एकैकस्य वर्णस्येति। (कै)

नाभिरूपैकदेशावच्छेदेनानेकयत्नोत्पत्तिर्युगपदिरुद्धा। वस्तुतो यत्ना-यौगपद्यमेव नर्त्तक्या नानावयवावच्छिन्नक्रियाः क्षणभेदेनैव काल-सौक्ष्म्यात्तु तदग्रह इत्याशयः ॥

## अवसानसंज्ञा प्राप्नोतीति । (कै)

एवं चैकसंज्ञाधिकारात्संहिता संज्ञा न स्यादिति भावः ॥ विच्छिन्ने वर्णे तेनैव यत्नेन नष्टे इत्यर्थो बोध्यः ॥ एतेन "येनैवे" त्यत्रैवकारो व्यर्थ इत्यपास्तम् ॥

## उपसंहृत्य (भा)

पूर्वयत्नं त्यक्त्वेत्यर्थः ॥

## अन्यमिति (भा)

यत्नान्तरमित्यर्थः ॥ प्रकर्षबोधकशब्दाभावात्कथं तत्प्रती-तिरत आह

---

वर्णं उच्चार्यते विच्छिन्ने वर्णे उपसंहृत्य तमन्यमुपादाय द्वितीयः प्रयुज्यते तथा तृतीयस्तथा चतुर्थं । एवं तर्ह्यनवकाशा संहिता-

---

यदा प्रयोक्ता शब्दोच्चारणान्न विरमति तदा शब्दाविराम । स च मध्यमविलम्बितयोरपि परसन्निकर्षाभावेऽप्यस्तीति सिद्धा संहितासंज्ञा। शब्दाविरामे प्रतिवर्णमिति । भिन्नप्रयत्नजनितध्वनिव्यङ्ग्यत्वाद्वर्णानां प्रतिवर्णं प्रयत्नभेदादेकप्रयत्नाविच्छेदाभावात् प्रथमप्रयत्नोच्चारितवर्णानन्तरं प्रयत्नान्तरेण वर्णान्तरोच्चारणादेकैकस्य वर्णस्य विरामसद्भावादवसानसंज्ञा प्राप्नोति। अवसानसंज्ञामिति। वर्णान्तरानुच्चारणे दध्य इत्यादौ सावकाशामिति

---

व्यक्तिभेदवत्त्वात्कथं परः सन्निकर्ष इत्यत आह । 'अर्धमात्राकालव्यवधान इति'। सत्यम्, एतावद्व्यवधानमवर्जनीयत्वात्सह्यते ऽधिकेन तु कालेन व्यवधानं

**सर्वत्रेति ॥** (कै)

शब्दस्य विरामः श्रवणक्षतः । अर्थस्य बोधक्षतः ॥

**अन्यत्र त्विति ।** (कै)

वर्णानन्तरं वर्णान्तरोच्चारणे मध्यकाले इत्यर्थः ॥

**घोषः ।** (कै)

ध्वनिविशेषः ॥

**घोषविच्छेदादिति ।** (कै)

असत्त्वादेव विच्छेदः ॥ तदाह

**असंनिधानादिति ॥** (कै)

**घोषवतामिति ।** (कै)

तृतीयचतुर्थानामित्यर्थः ॥

---

संज्ञा ऽवसानसंज्ञा बाधिष्यते। अथ अवसानसंज्ञायां प्रकर्षगति- र्विज्ञास्यते साधीयो यो विराम इति। कश्चात्र साधीयः।यः शब्दार्थयो- र्विरामः। अथवा ऋादाविरामः संहितेत्येतल्लक्षणं करिष्यते। ऋादा- विरामे स्पर्शघोषसंयोगे ऽसन्निधानादसंहितम्। वा। ऋादाविरामे स्पर्शा-

---

भावः। तेन सर्वथा वर्णानां यो विरामः सो ऽवसानसंज्ञो न तु शास्त्रीयक इत्यर्थः। अथवेति। सर्वत्र विरामसद्भावात् पुनः सुत्या विधेय व्याख्येयं। शब्दार्थयोरिति अन्यत्र तु वाक्यपि शब्दाविरामे पदार्थस्य वाक्यार्थस्य वा दविरामात्र भवत्यवसानसंज्ञा। ऋादाविराम इति। प्रयत्नविशेषजनिते वर्णविरामे ऽप्यनुपलभ्यमाने वर्णोच्चारणाद्व्य-

---

पारस्परिक व्यवधानं इत्यर्थः। यद्येवं कुमारीति कन्यौ स्यात् अध्यापो विभक्तितयो वा नहि तथा तयोः संनिकर्षो यथा कुमार्यो कुमारः

दोषाप्रसङ्गादिति । (कै)

तथा व्याख्याने हि तत्रापि दोष इति भाष्याशयस्तं तच्चा-संगतं स्यात्तत्र दोषाप्राप्तेरिति भावः ॥ "स्पर्शानां" मध्ये ऽघोषस्ये-त्यर्थः ॥ प्रथमसंयोगे फलं नास्तीति भाष्याशयमन्ये ॥ ननु कुक्कु-टादौ न किंचित्संहिता कार्यमत आह

कन इति ॥ (कै)

घोषविच्छेदादिति । (कै)

अघत्त्वादेव विच्छेदः ॥ भाष्ये

पचतीत्यस्य । (भा)

तच्च कथमिति शेषः ॥ कुक्कुट इत्यादौ कृतशङ्कः पचतीत्यत्र परिहरति ।

एकः पूर्वेति ॥ (भा)

तन्न्यायेन कुक्कुटादावपि समाधत्ते ।

---

नामघोषाणां च संयोगे ऽसंनिधानात्संहितासंज्ञा न प्राप्नोति । कुक्कुटः ( पिप्पल । क ) पिप्पकः पित्तमिति । किमुच्यते संयोग इति । अथ यद्येक· पचतीति एक पूर्वपरयोर्यदिन प्रच्छाद्यते । तद्यथा ।

---

ऽप्यनुवर्तमानो घोषो ऽकाद उच्यते । स्पर्शाघोषसंयोग इति । वर्गाणां प्रथमद्वितीयानां शषसानां च संयोगे घोषविच्छेदादसन्निधानात्संहिता-संज्ञाया अप्राप्तिरित्यर्थ । अघोषसंयोग इति । अघोषसंयोग इत्येव सिद्धत्वात् स्पर्शग्रहणमनर्थकम् । अस्पर्शानामप्यघोषाणां शषसानां संयोगे

---

सन्निकर्ष· सर्वासु वृत्तिषु नैरन्तर्येणोच्चारणादवर्णोपलम्भकभेदात्तु वृत्ति-

## एकेनेत्यादिना ॥ (भा)

## वर्णान्तरेति। (कै)

वर्णान्तरोच्चारणे नान्तरीयकार्धमात्राकालादन्येनाधिकेनेत्यर्थः ॥ ननु पूर्वः पूर्वकालः परश्च परकाल इति कथं पूर्वापरभावोऽत आह

## युगपदिति। (कै)

अयं भावः। यदि कालिकं पौर्वापर्यं तदा "इको यणचि" (६।१।७७) त्यादिसंहिताकार्यासम्भवः। पूर्वपरयोर्युगपत्स्थित्यभावादत एव न दैशिकमपीति ॥

## अनेकश इति। (कै)

भिन्नकाले इत्यर्थः ॥

## १ एकैकश इति (कै)

---

द्वयोरङ्गयोर्वितस्त्योर्मध्ये शुक्लं वस्त्रं तद्रूपमुपलभ्यते। बदरमिढके रिक्तको लोहकांसकट्टुक उपलभ्यते। एकेन तुल्यः सन्निधिः। वा। यथैवैको वर्णो द्वारा प्रच्छाद्यते एवमनेकोऽपि। अथवा पौर्वापर्यमकालव्यवेतं

---

तुल्यन्यायत्वात् संज्ञाया अप्रसंगात्। न च स्पर्शानामघोषाणां वर्णानां चेतिसमुच्चयः। घोषवतां स्पर्शानां संयोगे दोषाप्रसङ्गात्। कुक्कुट इति। कुक्कुट इवायमिति कनो लुम्मनुष्ये (५।३।९८) इति लुपि कृते संज्ञायामुपमानम् (६।१।२०४) इत्याद्युदात्तत्वं शिष्टमनुदात्तं ततः संहितायां विधीयमानमुदात्तादनुदात्तस्य

---

विधेय, स्वाम्यं खस्य उपलभ्यिकाको मध्यमापामधिकः विलम्बितायाम-

पाठान्तरम् । तचापूपौ द्वावितिवत् ग्रतिशुनत इतिवच द्विर्वचनप्रयोर्यौगपद्यं बोध्यम् ॥ तद्धितमात्रेण तु न वीप्साप्रतीति-रन्यत्र इत्यर्थस्यापि प्रतीतेः ॥ नन्वेकैकवर्णवर्तिनीलादिग्युचितम-गुणवचनत्वेन पुंवत्त्वाप्राप्तेरत आह

## सामान्येनेति । (कै)

तेनोपक्रमे च नपुंसकत्वमेवेति भावः ॥ अनेन युगपदुपलम्भं निरस्य युगपदास्त्वौसत्तामपि निरसितुमाह भाष्ये

## उच्चरितेति । (भा)

उच्चरितप्रध्वंसित्वम् । उच्चारणाधिकरणकालोत्तरकालवृत्तिध्वं-सप्रतियोगित्वरूपम् । उच्चारणाधिकरणकालोऽपि क्षणसमूहरूपः प्रत्यक्षयोग्यः क्षणिकस्य प्रत्यक्षायोगात् । यद्यवतिष्ठेरन्स्थितिकालिक-पौर्वापर्यमपि युगपदवस्थितेष्वेव ग्रहीतुं शक्यं न तु नष्टविद्यमान-योस्तदाह

---

संहितेत्येतल्लक्षणं करिष्यते । पौर्वापर्यमकालव्यपेतं संहिता चेत्पूर्वापरा-भावादसंहितम् । वा । पौर्वापर्यमकालव्यपेतं संहिता चेत्पूर्वापरा-भावात्संहितासंज्ञा न प्राप्नोति । न हि वर्णानां पौर्वापर्यमस्ति ।

---

स्वरितत्वं न स्यात् । यष्वतीति । अत्रापि चकारस्याघोषत्वादकारोच्चारणे घोषविच्छेदात् स्वरितत्वाप्रसङ्ग । क्रादेनेति । द्वयोरकारयोर्घोषवतोर्मध्ये चकारो घोषवानिव लक्ष्यत इत्यर्थः । आश्रयान्तरगतोऽपिगुण आश्रयान्तर उपलभ्यत इति दृष्टान्तेन दर्शयति । द्वयोरिति । एकेनेति । अनेकस्य यः सन्निकर्षः स एकेन तुल्यः । यथैको ऽतद्गुणोऽपि तद्गुणवस्त्वन्तर-सन्निधौ तद्गुण उपलभ्यते तथा ऽनेकोऽपि स्फटिकादिरित्यर्थः । अथ-

---

धिकतर, द्विविधा हिध्वनय प्राकृता वैकृताश्च, प्राकृता वर्णानामुत्पादकाः,

ज्येष्ठेत्यादि । (कै)

अयं ज्येष्ठोऽयं कनिष्ठ इति व्यवहारादयं पूर्वोऽयं पर इति व्यवहारस्य नष्टविद्यमानयोरसंभवः । नष्टविद्यमानयोः संबन्धस्य निरूपयितुमशक्यत्वादिति भावः ॥ वर्णानां स्फोटरूपाणां नित्यत्वादिदमयुक्तमत आह

व्यञ्जकेति । (कै)

स्फोटस्य तु सर्वसाधारण्येनैकत्वात्तमादाय पौर्वापर्यस्योक्तिसंभवोऽपि नास्तीति भावः ॥

अन्यच । (कै)

"तपर" (१।१।७०) सूत्रे ॥

स्याद्वेति । (कै)

कालकृतमप्रधानं स्याद्वेत्यर्थः । एवं च युगपदुच्चारणाभावाच्च संनिकर्षो नापि पौर्वापर्यमिति भावः ॥ तदाह भाष्ये

---

किं कारणम् । एकैकवर्णवर्तित्वाद्वाचः उच्चरितप्रध्वंसित्वाच्च वर्णानाम् । वा । एकैकवर्णवर्तिनी वाक् । न द्वौ युगपदुच्चारयति । गौरिति गकारे यावद्वाग्वर्तते । नौकारे न विसर्जनीये । यावदौकारे न गकारे न विसर्जनीये । यावद्विसर्जनीये न गकारे नौकारे । उच्चरितप्रध्वंसि-

---

त्वेति । वर्णान्तरोच्चारणकालादन्येन वर्णशून्येन कालेनाव्यवहितं पौर्वापर्यं संहितेति लक्षणं क्रियते । तेन मध्यमविलम्बितयोः परमसंनिकर्षाभावेऽपि संहितासंज्ञा सिध्यति । पूर्वापराभावादिति । युगपत्स्थितानां देशकृतं पौर्वापर्यं दृष्टम् । घटांस्त्वेकैकश उपलभ्यमाना यौगपद्येनाप्यभिधानात्कथं

---

वैकृते तु पुनःपुनरुपलम्भ, मध्यवर्णौ तु कालः यावांश्च स्थितयु तावानेव ।
यदा मन्दो वर्णौ तावता कालेन व्यवायोपलम्भाभावो ततोऽधिकेन व्यवायः

अथापर इति । (भा)

तदर्थध्वंसानन्तरमपरो वर्णः प्रयुज्यते तावतापि न पौर्वापर्यादि-व्यवहारे न वर्णान्तरस्य सहाय इत्यर्थः ॥

बुद्धौ कृत्वेति । (भा)

बुद्धावन्त करणे चेष्टाः कण्ठताल्वाद्यभिघातव्यापारजन्यात् शब्दान् कृत्वा प्रतिविम्बितान् कृत्वा शब्देन वाच्यानर्थान् बुद्धौ बुद्धिरूपे देशे दृष्ट्वा तत्रैव पौर्वापर्यव्यवहारं कुर्यादित्यर्थः ॥

बुद्धिविषयम् । (भा)

इत्यस्य बुद्धिस्थशब्दविषयमित्यर्थः ॥ तत्र वक्तृबुद्धिस्थत्वमुपपादयति

य इति । (भा)

तदर्थमेव शास्त्रप्रवृत्तेस्तस्यैव शास्त्रफलभागित्वेः ॥

अस्मिन्नर्थे इति । (भा)

---

त्वात् । उच्चरितप्रध्वंसिन खल्वपि वर्णाः । उच्चरित प्रध्वस्त । अथापर प्रयुज्यते न वर्णो वर्णस्य सहाय । एव तर्हि ।

बुद्धौ कृत्वा सर्वाश्चेष्टा कर्ता धीरस्तत्वन्नीति ।

शब्देनार्थान् वाच्यान्दृष्ट्वा बुद्धौ कुर्यात्पौर्वापर्यम् ।

---

पौर्वापर्यमब्रुवीरन् । एकवर्णवर्तित्वादिति । सामान्येनोपक्रमात् स्त्रीप्रत्यया-भाव । उच्चरितेति । क्रमोत्पन्ना अपि वर्णा यद्यवतिष्ठेरंस्तदा स्यात् पूर्वा-परव्यपदेशो ज्येष्ठमध्यमकनिष्ठव्यपदेशवत् । अनवस्थानात्तु नास्ति तात्त्विक पूर्वापरभाव इत्यर्थ । अत्रकध्वन्यपेक्षया चैतदुक्तम् । ध्वनिस्फोटभेदस्त्वन्यत्र निर्णीतत्वान्नेहोपन्यस्यते । न द्वौ युगपदिति । युगपद् द्वयोरुच्चारणे स्यादेवा-

---

परग्रहणेन व्यावर्त्यते,पदस्य परान्तरेण यदानन्तर्यं तच्चैव लोके संहिताशब्द प्रसिद्ध, तथा च संहितामधीते न पदानि पदान्यधीते न संहितामिति

एतदर्थमेव बुद्धावर्थदर्शनप्रयुक्तं श्लोके पौर्वापर्यमित्युपलक्षणम् । अयमिति बुद्ध्युपारूढसमानाश्रयस्थूलोच्चारणव्यङ्ग्यशब्दपरामर्शः । अन्यथेदमः प्रत्यक्षपरामर्शकत्वादेतदनुपपत्तिः ॥

**प्रयोक्तव्य ।** (भा)

परप्रत्यययोग्यस्थूलोच्चारणरूपेण प्रयोगेणाभिव्यक्तव्यः ॥

**अस्मिन् शब्दे** (भा)

इत्यस्य व्यञ्जनीये इति शेषः ॥ तदाह

**बुद्धिप्रकल्पित इति ।** (कै)

बुद्धिस्थप्रकल्पितशब्दविषय इत्यर्थः ॥

**प्रकल्पिते-** (कै)

त्यस्य प्रतिबिम्बेन तत्तद्रूपतया प्रकल्पितेत्यर्थः ॥

---

बुद्धिविषयमेव शब्दानां पौर्वापर्यम् । इह य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति अस्मिन्नर्थे ऽयं शब्दः प्रयोक्तव्यः अस्मिंस्तावच्छब्देऽयं तावदर्थः ततोऽयं ततोऽयमिति ।

---

व्यवधानम् । कालेन पौर्वापर्यं तु मा भूदित्यर्थः । वागिति । वागिन्द्रियमित्यर्थः । एतेन युगपदनवस्थानात् सन्निकर्षोऽप्यायाति इति विज्ञेयम् । एवं तर्हीति । बुद्धिप्रकल्पितः सर्वः पौर्वापर्यसन्निकर्षादिव्यवहार इत्यर्थः । धीरः पण्डितः । तत्वमीतिरिति । तमनं सत् साक्षि यस्याः सा ततता सकलविषयव्यापिनी नीतिर्बुद्धिर्यस्य स ततनीतिरिति । अन्ये तु तनू वनीतिरिति पठन्ति । तन्वतो विषयान् व्याप्नुवतो बुद्धिरस्येति स एवार्थः ।

---

यङ्कारो भवन्ति, ततश्च कुमार्यांवित्यादौ परावयवे संहिताकार्यं न स्यादिति सूत्रारम्भः ।

# विरामोऽवसानम् । १ । ४ । ११० ॥

[1]नानाप्रकारं गच्छति प्राप्नोति यत्तन्नानाप्रकारं गम्यते तथा प्राप्य किं युक्तमिति परीक्षत इत्यर्थः ॥ अत्र लक्षणे सन्देहाभावादाह केचिदिति

**प्रागभावस्येति ।** (कै)

प्राग्वर्त्तिनः शब्दाभावस्येत्यर्थः ॥ भाष्ये

**रसः ।** (भा)

**रथः ।** (भा)

१ "इदं विचार्यते" इति भाष्याक्षरं मनसि कृत्वा उक्तं नागेशेन ।

विरामो ऽवसानम् । १ । ४ । ११० । इदं विचार्यते । अभावोऽवसानलक्षणं स्याद्विरामो वेति । कश्चात्र विशेषः । अभावे ऽवसानलक्षणे उपर्यभाववचनम् । वा । अभावे ऽवसानलक्षणे उपर्यभावग्रहणं

विरामो ऽवसानम् । १ । ४ । ११० । इदं विचार्यत इति । विचरति नाना गच्छति यदस्तु तद्विचार्यते परीक्ष्यत इत्यर्थः । अभावो ।वेति । केचिदभावोऽवसानमिति पठन्ति । अन्ये तु विरामो-

विरामोऽवसानम् । १ । ४ । ११० । वर्णानामभावोऽवसानसंज्ञः स्यात् । संज्ञाप्रदेशा वावसान इत्यादयः । अभावस्यापि बुद्धिस्थत्वं

"विरामोऽवसानम्" । १ । ४ । ११० । 'विरतिर्विराम इति' । विराम इति भावे घञ्, विरामो वर्णोच्चारणाभाव । अर्थान्तरमाह । 'विरम्यतेऽनेनेति

इत्यत्र "खरवसानयोरि" (८।३।१५)ति विसर्जनीयः प्रसज्येतेति। पदावयवस्यावसाने रेफस्य विसर्ग इति सूत्रार्थ इति भावः॥ "खरीति" वाक्ये तु रेफान्तस्य पदस्येत्यर्थ इति बोध्यम्॥

अदर्शनमिति। (कै)

यद्यपि तद्दर्शनाभावो ऽभावस्य वर्णस्य तथाप्यभावपदेन तस्यापि लाभः। वर्णदर्शनाभाववर्णाभावयोः समनियतत्वादिति भावः॥

अस्मिन् पक्षे इति। (कै)

वर्णान्तराभावोपलक्षितवर्णस्यावसानत्वपक्षे इत्यर्थः॥

---

कर्तव्यम्। उपरि यः अभाव इति वक्तव्यम्। पुरस्तादपि हि शब्दस्याभावस्तन्मा भूदिति। किं च स्यात्। रथः। रयः। खरवसानयोर्विसर्जनीयः (८। ३। १५) इति विसर्जनीयः प्रसज्येत॥ अस्तु तर्हि विरामः। विरामे विरामवचनम्। वा। यस्य विरामः विरामग्रहणं तेन कर्तव्यम्। ननु च यस्याप्यभावस्तस्याप्यभावग्रहणं कर्तव्यम्। परार्थं मम भविष्यति। अभावो

---

ऽवसानमिति तत्र युक्तायुक्तविचारः क्रियते। उपरीति। वर्णोच्चारणादूर्ध्वं योऽभावः तदुपलक्षितो वर्णोऽवसानमिति वक्तव्यं प्रागभावस्योपलक्षणत्वनिवृत्त्यर्थम्। रस इति। परवत् पूर्वस्यापि रेफस्याभावविषयत्वाद्विसर्जनीयप्रसङ्गः। विरामे विरामवचनमिति। अधिकं कर्तव्य-

---

पौर्वापर्यमस्त्येव। यथोच्चरितप्रध्वंसिना नित्यविभूनां वा वर्णानाम्। यद्वा। विरम्यते ऽनेनेति करणे घञ् परमवर्णस्य संज्ञा। अस्मिन्पक्षे खरवसानयो-

---

वा विराम इति'। 'कृत्यल्युटो बहुलमि'त्यसंज्ञायामपि 'हलश्चे' ति करणे घञ, पूर्वश्चाभावः संज्ञी उत्तरश्चान्त्यो वर्णः, तेन हि विरम्यते, तत्राद्ये पक्षे खरवसानयोरिति परसप्तमी, कथं पुनरवसानेन, पौर्वापर्यमभावो

## स च प्रवृत्तस्येति । (कै)

एवं च पुरस्तान्न विरामव्यवहार इति भावः ॥ भाष्ये

## नेदमवसानलक्षणमिति । (भा)

अवसानव्यवहारविषयस्य वर्णस्योपलक्षणभूतं वस्तु न विचार्यते इत्यर्थः ॥

## प्रसक्ताभाव इति । (कै)

प्रसक्तोच्चारणाभाव इत्यर्थः ॥ प्रवृत्तौ रसेः प्रयोगस्य क्वाप्यभावादाह

---

लोपः ( १ । १ । ६० ) । ततो ऽवसानं चेति । ममापि तर्हि विरामग्रहणं परार्थं भविष्यति । विरामो लोपो ऽवसानं चेति । उपरि यो विराम इति वक्तव्यम् । पुरस्तादपि शब्दस्य विरामः । तत्र मा भूदिति । किं च स्यात् । रसः रथः । खरवसानयोर्विसर्जनीय इति विसर्जनीयः प्रसज्येत । ( नैष दोषः । क ) आरम्भपूर्वको मम विरामः । अथ वा नेदमवसानलक्षणं विचार्यते ।

---

मित्यर्थः । ततोऽवसानं चेति । अदर्शनमभाव इत्येक एवार्थः । तेन पुनरभावग्रहणं न कर्तव्यमित्यर्थः । तत्र लोपसंज्ञायामभावः संज्ञित्वेनाश्रीयते अवसानसंज्ञायां तूपलक्षणत्वेन । तेन वर्णान्तराभावोपलक्षितो वर्णोऽवसानसंज्ञ इत्यर्थः । उत्तरत्र त्वभावस्यैव लोपावसानसंज्ञे व्याख्यास्येते ।

---

रित्येकापि सप्तमी विषयभेदाद्भिद्यते । खरि परे रेफस्य विसर्गः, अवसाने च रेफे स्थानिनीति । अत्र वार्त्तिकम् । संहितावसानयोर्लोकविदितत्वात्सिद्धमिति । तथा च सूत्रद्वयं मास्त्वित्यर्थः ।

---

हि सः, खरा वा कथं, नहि यदा सरस्ति तदा रेफो यदा रेफस्तदा रुर् वर्णानां क्रमभावित्वाद् उच्चरितप्रध्वंसित्वाच्च । अथ तत्र बुद्धिपरिकल्पितं पौर्वापर्यं तदभावेऽपि समानमेवं

**प्रवृत्तौ सत्यामिति ।** (कै)

न प्रवृत्यनिवृत्तानीति पाठः । उपरतविरतौ च पर्यायौ ॥

**क्वचिद्वनानीति पाठ इति ।** (कै)

प्रतानीत्यस्य स्थाने तथा पाठ इत्यर्थः ॥ तत्र वनपदं वान-प्रस्थाश्रमोपलक्षणम् । एतदन्तेन लक्षणयोः साम्यमुपपादितम् ॥

अथोभयत्रापि दोषं शङ्कते

**भावाविरामेति ॥** (कै)

**नापि शब्दान्तरेति ।** (कै)

"वावसाने" (८।४।५६) इत्यादाववसाने स्थितस्येत्यर्थः । प्रत्या-म्नायोचित इति भावः ॥

---

किं तर्हि । संज्ञा । अभावो ऽवसानसंज्ञो स्याद्विरामो वेति । कथात्र विग्रहः । अभावे ऽवसानसंज्ञिन्युपर्यभाववचनम् । वा । अभावे ऽवसानसंज्ञिन्युपर्य-भावपदस्यं कर्तव्यम् । उपरि योऽ भाव इति वक्तव्यम् । पुरस्तादपि हि शब्दस्याभावस्तत्र मा भूदिति । किं च स्यात् । रसः रथः । खरवसानयो-र्विसर्जनीय इति विसर्जनीयः प्रसज्येत । अस्तु तर्हि विरामोऽवसानम् ।

---

अस्मिन् पक्षे खरवसानयोरिति षष्ठी । ततः सामीप्यस्य रेफस्याऽवसानस्य च रेफविदर्शं । अस्यैवापि सप्तमी विषयभेदाद्धुक्तं । यदि परतो रेफस्य विसर्जनीयोऽवसाने च रेफे स्यादिति विसर्जनीय इत्यादिशास्य विषय-त्वेन स्यादो विरुध्यते । समाप्तीति । अभावो विराम इति पर्यायत्वं मन्यते ।

---

पक्षे खरवसानयोरित्यत्रापि सप्तमी विषयभेदाद्दृश्यते यदि परतो रेफस्य विसर्जनीयो भवति अवसाने च रेफे स्यादिति विसर्जनीय इति स्यामादेशस्य विषयता विरुध्यते एवं 'वाऽऽरुणम्' इत्यत्रापि । 'दधि अश्नाति' । 'मधोऽ

## अविच्छेदेनेति । (कै)

अविच्छेदविरामौ पर्यायौ तत्प्रतियोगिनौ विच्छेदविरामौ च क्रियाविशेषरूपौ भावपदार्थौ । एतेनाभावस्य भावप्रतियोगिकत्वादिदं चिन्त्यमिति परास्तम् । अन्याभावपरो वर्ण इत्यादि तत्त्वे वक्ष्यत्येव ॥ इदानीम्

## अपर आहेति । (कै)

व्याख्यानकाले । अन्ये तु वर्णानामभाव इत्युक्ते वर्णत्वावच्छिन्नप्रतियोगिताकाभाव इत्यर्थः स च गतवर्णसत्त्वे इति भाष्यार्थ इत्याहुः ॥ ननु शब्दस्य भावाविरामभावित्वेऽप्यभावोऽवसानमिति पक्षे को दोषस्तत्र शब्दस्यानिवेशादित्यत आह

---

विरामे विरामवचनम् । वा । यस्य विरामस्तेन विरामग्रहणं कर्तव्यम् । ननु च यस्याप्यभावस्तेनाप्यभावग्रहणं कर्तव्यम् । परार्थं मम भविष्यत्यभावो लोपस्ततोऽवसानं चेति । ममापि तर्हि विरामग्रहणं परार्थं भविष्यति विरामो लोपोऽवसानं चेति । उपरि यो विराम इति वक्तव्यम् । ननु चोक्तमारम्भपूर्वके इति । नावश्यमयं रमि प्रवृत्तावेव वर्तते । किं तर्हि । अप्रवृत्तावपि । तद्यथा । उपरतान्यस्मिन्कुले व्रतानि । उपरत स्वाध्याय इति । न च तत्र

---

आरम्भपूर्वक इति । निवृत्तिर्विराम स च प्रवृत्तस्य भवतीति भावः । अवसानलक्षणमिति । अभावोपलक्षितो वर्णोऽवसानं विरामोपलक्षितो वेति पूर्वं विचारितम् । इदानीं तु तावेव सञ्ज्ञित्वेन विचार्येते अभावो लोप इत्येकस्य संज्ञाद्वयविधानसामर्थ्याद्विषयविभाग आश्रीयते । प्रसक्ताभावो लोपसञ्ज्ञोऽप्रसक्ताभावस्त्ववसानसंज्ञमिति । नावश्यमिति । प्रवृत्तौ इत्या का

---

प्रत्ययस्यानुनासिक' इत्यत्र वावसान इति वर्तते । ननु च लोके एवावसान शब्दो विरामे प्रसिद्ध, यथाग्रपूर्वं स्थितिरवसानौ वर्तेते केनैतदवसीयत इति,

## उपाधिरहितस्येति । (कै)

प्रतियोगिरहितस्येत्यर्थः ॥ शब्दशास्त्रत्वाच्च शब्द एव प्रतियोगीति भावः ॥ विरामो अभावपदार्थोऽपि संबन्धादिवद्भावसमानाधिकरणत्वाच्च प्रतियोगि सापेक्ष इति भावः ॥

## बुद्धिकल्पितेति । (कै)

बुद्धिदेशे ऽग्रे ऽभावं दृष्ट्वा तत्र कल्पितं पौर्वापर्यमित्यर्थः ॥ ननु लोके संहिताशब्दः पदनैरन्तर्ये एव प्रसिद्धो न वर्णनैरन्तर्ये इत्यत आह

---

स्वाध्यायो भूतपूर्वो भवति नापि व्रतानि । भावाविरामभावित्वाच्छब्दस्यावसानलक्षणं न । वा । भावाविरामभावित्वाच्छब्दस्यावसानलक्षणं नोपपद्यते । किमिदं भावाविरामभावित्वादिति । भावस्याविरामः भावाविरामः । भावाविरामेण भवतीति भावाविरामभावी । भावाविरामभाविनो भावो भावाविरामभावित्वम् । अपर आह । भावभावित्वादविरामभावित्वाच्च शब्दस्यावसानलक्षणं नोपपद्यते इति । तत्पर इति वा वर्णस्यावसानम् । वा । विराम-

---

निवृत्तिस्तस्यामित्यर्थः । उपरतान्यस्मिन्निति । न प्रवृत्त्यनिवृत्तानि किं तर्हि पूर्वमेवाप्रवृत्तानीत्यर्थ । नियतविषयत्वाच्च शब्दप्रयोगस्य प्रायवियाणमुपरतमिति प्रयोगाभावः । क्व चिद्धनानीति पाठ । भावाविरामभावित्वादिति । इह शब्दस्य स्वसंबन्धोऽभावोऽवसानलक्षणं स्यात् शब्दान्तरस्य संबन्धी वा । न तावत् स्वसम्बन्धी विरोधात् । नहि यस्य सत्ता तस्य तदानीमेवासत्ता युज्यते । नापि शब्दान्तरसंबन्धी । नहि घटाभावः पटस्याभावो भवति । भावस्य सत्ताया अविच्छेदेन भवत्यवश्यमिति भावाविरामभावी

---

पराभवेऽपि पर्यवसितो देवदत्त इति, अवसानशब्दस्तु विराम एव प्रसिद्ध न च रेफस्यान्ततिपराभवयोः कारणत्वं सम्भवतीति नार्थं संज्ञाकरणेन

यथेति ॥ (कै)

ऐकपद्ये इति । (कै)

एकपदे इत्यर्थः ॥

भावसाधन इति । (कै)

---

परो वर्णः अवसानसंज्ञो भवतीति वक्तव्यम् । वर्णोऽन्त्यो वावसानम् । वा । अथवा व्यक्तमेव पठितव्यम् अन्त्यो वर्णो ऽवसानसंज्ञो भवतीति । तत्तर्हि वक्तव्यम् । न वक्तव्यम् । संहितावसानयोर्लोकविदितत्वात् सिद्धम् । वा । संहिता अवसानमिति लोकविदितावेतावर्थौ । एवं हि कश्चित्कंचिदधीयानमाह प्रश्नो देवीयं संहितयाधीष्वेति । स तत्र परमसंनिकर्षमधीते । अपर आह । केनावस्यसीति । स आह । अकारेणेकारेणोकारेण वेति । एवमेतौ लोकविदितावर्थौ तयोर्लोकविदितत्वात्सिद्धम् इति ॥

---

शब्द । नहि शब्दस्य भवनकाले सत्ता विच्छिद्यते इत्यर्थः । अपर आहेति । भावविरामशब्दयोर्द्वन्द्व इत्यर्थ । इदानीं सत्त्वशब्दयस्याप्यनुपपत्तिं प्रतिपाद्यते । भावेन सत्तया विरामेण अविच्छेदेन भवतीत्यर्थ । उपाधिरहितस्याभावस्य प्रतीतिर्नास्ति । तत्पर इति वेति । इदानीं शब्दान्तराभावपरो वर्णोऽवसानसंज्ञो भवतीति प्रतिपाद्यते । अभावेनापि बुद्धिपरिकल्पितं पौर्वापर्यमाश्रीयते । अथवेति । यद्यपि विरामशब्दे करणसाधने आश्रीयमाणेऽयमर्थो लभ्यते तथापि भावसाधनस्यापि संभवात् करणसाधनत्वं संदिग्धमिति व्यक्तमेव पठितव्यमित्युक्तम् । संहितयाधीष्वेति । यथा पदनैरन्तर्ये संहिताव्यवहारस्तथैकपद्येऽपि वर्णनैरन्तर्ये । अवसानशब्दोऽपि विधिप्रदेशेषु भावसाधन करणसाधनो वा आश्रयिष्यते इति नार्थ संज्ञादयविधानेन तेन विनापीष्टस्य सिद्धत्वात् ॥

---

तदाह । 'संहितावसानयोर्लोकविदितत्वात् सिद्धमिति' संहिताशब्दोऽपि संनिकर्षमात्रे प्रसिद्धो न पदयोरेव संनिकर्ष इति वार्तिककारो मन्यते ॥

अत्र पक्षे "खरवसानयोरि"त्यत्र बौद्धं पौर्वापर्यमाश्रणीयमिति शिवम् ॥

इति श्रीकालोपनामकशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते महाभाष्यप्रदीपोद्द्योते प्रथमस्य चतुर्थे चतुर्थमाह्निकम् ॥
पादोऽध्यायश्च
समाप्तः ॥

शिवम् ॥



श्रीमहाभाष्ये विद्वन्नागेशनिर्मितम् ।
भाष्यप्रदीपोद्द्योताख्यं यदा विवरनाह्वयम् ॥ १ ॥
बहुस्थले महाभाष्यं प्रदीपोऽपि क्वचित् क्वचित् ।
न सुयोजयितुं शक्यं यन्निरीक्षणमन्तरा ॥ २ ॥
तन्मूद्रणं समारब्धं टिप्पन्या विषमे सह ।
प्रथमाध्यायपर्यन्तं तस्य पूर्त्तिमनैष्यहम् ॥ ३ ॥
काशीस्थितं शिवकुमारपदाभिधान-
मार्यं प्रणम्य शिरसा वचसा हृदापि ।
तत्सूक्ति संस्मृति निरस्त समस्त शङ्कः
वङ्गेषु वासि बहुवल्लभ नामधेयः ॥ ४ ॥
सोयापराधमथवानपराधतायै-
सर्वं निवेदय इमं विबुधेष्वभीरु ।
यत् सत्यु किंचिदिह तद्गुरुभाषितं मे ।
यच्चेतरद् भवति तन्मम बालिशत्वम् ॥ ५ ॥

| | Rs | |
|---|---|---|
| Pad n awat Fasc 1-4 @ 2/ | 8 | 0 |
| Pa ç a Parvan (Text) Fasc 1 5 @ /6/ each | 1 | 14 |
| Prakri a Pa ngala n Fasc 1 7 @ /6/ eacl | 2 | 10 |
| Pr th v raj Rasa (Text) Part II Fasc 1 5 @ /6/ eacl | 1 | 14 |
| D tto (Engl sl) Part II Fasc 1 | 0 | 12 |
| Prak ta Laksaṇam (Text) Fasc 1 | 1 | 8 |
| Paraçara Smṛt, Text Vol I Fasc 1 8 Vol II Fasc 1 6; Vol III Fasc 1 6 @ /6/ each | 7 | 8 |
| Paraçara Institutes of (Engl sl | 0 | 12 |
| Prabandl ac ntamaṇi (Englisl) Fasc 1 3 @ /12/ eacl | 2 | 4 |
| *Sam a Vēda Samh ta Text) Vols I Fasc 5 10; II 1-6; III 1 7; IV 1-6; V 1 8 @ /6/ each Fasc | 12 | 6 |
| Sankhya S t a Vṛtt (Text Fasc 1 4 @ /6/ eacl | 1 | 8 |
| D tto (Engl sh) Fasc 1 3 @ /12/ each | 2 | 4 |
| Sraddl a Kriya Kaumud Fasc 1-5 | 1 | 14 |
| Suçruta San l ta (Eng) Fasc 1 @ /1?/ | 0 | 12 |
| *Ta ttereya San hita (Text) Fasc 14-45 @ /6/ each | 12 | 0 |
| Tandya Brahmana (Text) Fasc 1 19 @ /6/ each | 7 | 2 |
| Trantra Vart ka (Engl sh) Fasc 1-? @ /12/ | 1 | 8 |
| Tattva C ntamaṇ (Text Vol I Fasc 1 9 Vol II Fasc 2 10 Vol III Fasc 1 2 Vol IV Fasc 1 Vol V Fasc 1 5 Part IV Vol II Fasc 1 12 @ /6 each | 14 | 4 |
| Tattvarthad gama Sutrom Fasc 1 2 | 0 | 12 |
| Tr kāṇda Maṇda an (Text) Fasc 1 3 @ /6/ | 1 | 2 |
| Upan ta bl ava prapañca katl ā (Text) Fasc 1 6 @ /6/ each | 2 | 4 |
| Uvasagadasao Text and Engl sh Fasc 1 6 @ /12/ | 4 | 8 |
| Vallala C ar ta Fasc 1 | 0 | 6 |
| Varaha Purana Text Fasc 1 14 @ /6/ each | 5 | 4 |
| Varsa Krya Kaumud Fasc 1 6 @ /6/ | 2 | 4 |
| *Vayu Purana Text Vol I Fasc 2 6 Vol II Fasc 1 7 @ /6 each | 4 | 8 |
| V dhano Par gata Fasc 1 5 | 1 | 14 |
| V ṣṇu Smṛt Text Fasc 1 2 @ /6/ each | 0 | 12 |
| V vadaratnakara Text Fasc 1 7 @ /6 each | 2 | 10 |
| Vṛl an arad ya Purana Text Fa c 2 6 @ /6/ | 1 | 14 |
| Vṛhat Svayambh Purana Fasc 1-6 | 2 | 4 |

*Tibetan Series*

| | | |
|---|---|---|
| Pag Sam Tl S ā Fasc 1-4 @ 1/ each | 4 | 0 |
| Sher Phy n Vol I Fasc 1 5 Vol II Fasc 1 3; Vol III Fas 1 5 @ 1/ each | 13 | 0 |
| Rtogs brjod dpag hkhri S ā (T b & Sans) Vol I Fasc 1 5; Vol II Fasc 1 5 @ 1/ each | 10 | 0 |

*Arabic and Persian Series*

| | | |
|---|---|---|
| Alamg rnamah w th Index Text Fasc 1 13 @ /6 each | 4 | 14 |
| Al Muqaddasi (Engl sh) Vol I Fasc 1-3 @ 12/ | 2 | 4 |
| A n Akbar (Text Fasc 1 22 @ 1 each | 22 | 0 |
| D tto (Engl sh Vol I Fasc 1 7 Vol II Fasc 1 5 Vol III Fasc 1 5 @ 1/12/ each | 29 | 12 |
| Akbarnamah w th Index (Text Fasc 1 37 @ 1/ each | 37 | 0 |
| D tto Engl sh Vol I Fasc 1-8; Vol II Fasc 1 @ 1/ each | 9 | 0 |
| Arab c B bl ography by Dr A Sprenger | 0 | 6 |
| Badshahnamah w th Index (Text Fasc 1 19 @ /6/ each | 7 | 2 |
| Catalogue of Arab c Books and Manuscr pts 1 2 | 2 | 0 |
| Catalogue of the Pe s an Books and Manuscr pts n the L b ary of the As at c Soc ety of Bengal Fasc 1 3 @ 1 each | 3 | 0 |
| D ct onary of Arab c Techn cal Terms and Append x Fasc 1 21 @ 1 each | 21 | 0 |
| Farhang Rash d Text Fasc 1 14 @ 1/ each | 14 | 0 |
| F hr st Tus or Tusy s l st of Shy ah Books Text) Fasc 1 4 @ /12/ each | 3 | 0 |
| Futuh ush Shām of Waq d Text Fasc 1 9 @ /6/ each | 3 | 6 |

| | | |
|---|---|---|
| Muntakhabu-t-Tawarikh (Text) Fasc 1-15 @ /6/ each ... Rs | 5 | 10 |
| Muntakhabu-t-Tawarikh (English) Vol I Fasc 1-7 Vol II Fasc 1-5 and 3 Indexes; Vol III Fasc 1 @ /12/ each | 12 | 0 |
| Muntakhabu-l-Lubab (Text) Fasc 1-19 @ /6/ each | 7 | 2 |
| Ma-asir-i-Alamgiri (Text) Fasc 1-6 @ /6/ each | 2 | 4 |
| Nukhbatu-l-Fikr (Text) Fasc 1 | 0 | 6 |
| Nizami's Khiradnamah-i-Iskandari (Text) Fasc 1-2 @ /12/ each | 1 | 8 |
| Riyazu-s-Salatin (Text) Fasc 1-5 @ /6/ each | 1 | 14 |
| Ditto (English) Fasc. 1-5 | 3 | 12 |
| Tabaqat-i-Nasiri (Text) Fasc 1-5 @ /6/ each | 1 | 14 |
| Ditto (English) Fasc 1-14 @ /12/ each | 10 | 8 |
| Ditto Index | 1 | 0 |
| Tarikh-i-Firuz Shahi of Ziyau-d-din Barni (Text) Fasc 1-7 @ /6/ each | 2 | 10 |
| Tarikh-i-Firuzshahi of Shams-i-Siraj Afif (Text) Fasc 1-6 @ /6/ each | 2 | 4 |
| Ten Ancient Arabic Poems Fasc 1-2 @ 1/8/ each | 3 | 0 |
| Wis o Ramin (Text) Fasc 1-5 @ /6/ each | 1 | 14 |
| Zafarnamah Vol I Fasc 1-9 Vol II Fasc 1-8 @ /6/ each | 6 | 6 |
| Tuzuk-i-Jahangiri (Eng ) Fasc 1 ... | 0 | 12 |

## ASIATIC SOCIETY'S PUBLICATIONS

| | | | |
|---|---|---|---|
| 1 | Asiatic Researches Vols XIX and XX @ 10/ each | 20 | 0 |
| 2 | Proceedings of the Asiatic Society from 1865 to 1869 (incl ) @ /6/ per No ; and from 1870 to date @ /8/ per No | | |
| 3 | Journal of the Asiatic Society for 1843 (12) 1844 (12) 1845 (12) 1846 (5) 1847 (12) 1848 (12) 1866 (7) 1867 (6) 1868 (6) 1869 (8) 1870 (8) 1871 (7) 1872 (8) 1873 (8) 1874 (8) 1875 (7) 1876 (7) 1877 (8) 1878 (8) 1879 (7) 1880 (8) 1881 (7) 1882 (6) 1883 (5) 1884 (6) 1885 (6) 1886 (8) 1887 (7) 1888 (7) 1889 (10) 1890 (11) 1891 (7) 18[illegible] (8) 1893 (11) 1894 (8) 189[illegible] (7) 1896 (8) 1897 (8) 1898 (8) 1899 (8) *1900 (7) & 1901 (7) 1902 (9) 1903 (8) @ 1/8 per No to Members* and @ 2/ per No to Non-Members | | |
| | *N B — The figures enclosed in brackets give the number of Nos in each Volume* | | |
| 4 | Centenary Review of the Researches of the Society from 1784-1883 | 3 | 0 |
| | A sketch of the Turki language as spoken in Eastern Turkistan by R B Shaw (Extra No *J A S B* 1878) | 4 | 0 |
| | Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No *J A S B* 1868) | 2 | 0 |
| | Catalogue of Mammals and Birds of Burmah by E Blyth (Extra No *J A S B* 1875) | 4 | 0 |
| 5 | An-nal Mushtabah ... | 3 | 0 |
| 6 | Catalogue of Fossil Vertebrata | 3 | 0 |
| 7 | Catalogue of the Library of the Asiatic Society Bengal | 3 | 8 |
| 8 | Inayah a Commentary on the Hidayah Vols II and IV @ 16/ each | 32 | 0 |
| 9 | Jawamiu-l-ilm ir riyazi 168 pages with 17 plates 4to Part I | 2 | 0 |
| 10 | Khizanatu-l-ilm | 4 | 0 |
| 11 | Mahabharata, Vols III and IV @ 20 each | 40 | 0 |
| 12 | Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I-III with 8 coloured Plates 4to @ 6/ each | 18 | 0 |
| 13 | Sharaya-ool-Islam | 4 | 0 |
| 14 | Tibetan Dictionary by Csoma de Körös | 10 | 0 |
| 15 | Ditto Grammar | 8 | 0 |
| 16 | Kacmiracabdamrta, Parts I and II @ 1/8 | 3 | 0 |
| 17 | A descriptive catalogue of the paintings statues, &c., in the rooms of the Asiatic Society of Bengal by C R Wilson | 1 | 0 |
| 18 | Memoir on maps illustrating the Ancient Geography of Kasmir by M A Stein Ph.D., Jl Extra No 2 of 1899 ... | 4 | 0 |

| | | |
|---|---|---|
| Notices of Sanskrit Manuscripts Fasc 1-29 @ 1/ each ... | 29 | 0 |
| Nepalese Buddhist Sanskrit Literature by Dr R L Mitra | 5 | 0 |

N B — All Cheques Money Orders &c., must be made payable to the "Treasurer Asiatic Society" only

**Books are supplied by V P P** 14-9-04.